कालस्वरूपं हि वैशेषिकैर्व्यवहारपरत्वेनैव निरूप्यते। वैदिकैस्तु "कालः स ईयते प्रथमो नु देवः"[१] इत्यादिश्रुत्या मुख्यतः स निर्विशेषः परात्परतरः सर्वेश्वरः[२] सर्वाध्यक्षश्च स्तूयते, ततः सगुणो व्यावहारिकः परिच्छिन्नोऽपीति विशेषः। तत्र पूर्वं काणादनयेन 'तर्ककौमुद्याम्' कालस्वरूपमेवं विचार्यते—

'ज्येष्ठत्वकनिष्ठत्वज्ञानाधीनपरत्वापरत्वानुमेयः कालः। संख्यापरिमाणपृथक्त्व-संयोगविभागगुणपञ्चकवान्। सोऽप्येको विभुर्नित्यश्च। तथाप्युपाधिभेदात् त्रिविधः, अतीतोऽनागतो वर्तमानश्चेति। तद्व्यक्तिध्वंसविशिष्टः कालस्तद्व्यक्तेरतीतकालः। तद्व्यक्तिप्रागभावविशिष्टः कालस्तद्व्यक्तेरनागतकालः। तद्व्यक्तिध्वंसप्रागभावान-वच्छिन्नः कालस्तद्व्यक्तेर्वर्तमानकालः'।

तर्कसङ्ग्रहेऽपि—"अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च" इत्युक्तम्। अत्र कालस्य व्यावहारिकत्वे विभुत्व-नित्यत्वयोः समन्वयो वैदिकनयेनैव सम्भवति।

वेदविद्यानुसारं कालो द्विविधः—नित्योऽजन्यः अपरिच्छिन्नात्मक एकः, मायो-पहितचैतन्यादुत्पादितः सूर्यादिग्रहगतिक्रियाधीनः परिच्छिन्नात्मकः कालोऽपरः। अपरिच्छिन्नात्मकस्य कालस्य नित्यस्वरूपमुक्तं कूर्मपुराणे—

अनादिरेष भगवान्कालोऽनन्तोऽजरोऽमरः।
सर्वगत्वात्स्वतन्त्रत्वात्सर्वात्मत्वान्महेश्वरः॥

ब्रह्माणो बहवो रुद्रा ह्यन्ये नारायणादयः।
एको हि भगवानीशः कालः कविरिति स्मृतः॥

ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः।
प्रोच्यते कालयोगेन पुनरेव च सम्भवः॥

परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः।
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः॥

तस्मात्कालात्मकं विश्वं स एव परमेश्वरः।

निरुक्तकृता यास्केन कालशब्दनिर्वचनं कुर्वताऽभिहितम्—'कालः कालयतेर्गति-कर्मणः" इति[३]। दुर्गाचार्येण स्वव्याख्याने उक्तं यत्—'स कालः, सर्वाण्येव भूतानि कालयति क्षयं नयतीति कालः'। अतो ब्रह्माण्डस्य गतिमत् किमप्यपूर्वं तत्त्वं 'काल' इति फलति। अथर्ववेदस्य 'कालसूक्तानुसारं'[४] अपरिच्छिन्नात्मकः काल एव परतत्त्वम्। परतत्त्वसंलक्षकगुणा विभुत्व-नित्यत्व-नित्यज्ञानाश्रयत्व-सर्वज्ञत्वादयः

१. अथर्ववेदः—१९।५३।१; २. 'कालो ह सर्वस्येश्वरो' (तत्रैव १९।५३।८)
३. निरुक्तम्—२।७।२५; ४. अथर्ववेदः—१९।५३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कालतत्त्वे अनुस्यूताः सन्ति । अत एवोक्तं कालसूक्तव्याख्यानारम्भे सायणाचार्येण— "अनेन सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते"[1] । विष्णुधर्मोत्तर-पुराणेऽपि कालतत्त्वस्य माहात्म्यमेभिः शब्दैर्वर्णितं विद्यते--

"अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः ।
कलनात्सर्वभूतानां स कालः परिकीर्तितः" ॥

अथर्ववेदीये कालसूक्तस्य प्रथममन्त्रे कालतत्त्वस्य स्वरूपं प्रतिपादयता वैदिक-र्षिणा उच्यते--

"कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमारोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा[2]" ॥

मन्त्रेऽस्मिन् 'अश्व'रूपेण कालस्य वर्णनं विद्यते । अश्वशब्दोऽत्र त्रिष्वर्थेषु प्रयुक्तः । एको गतिशक्त्योः प्रतिमानभूतः पशुविशेषः, आदित्यवाचकोऽपरः, अश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीति व्युत्पत्त्या कालवाचकस्तृतीयः । त्रयोऽप्येते अर्थाः कालस्वरूपवर्णने संगता भवन्ति । तद्यथा—

अश्वः = सर्वव्यापकः, कालः = कलयिता, सर्वस्य जगतोऽनवच्छिन्न कालरूपः परमेश्वरः, सप्तरश्मिः = रश्मिशब्देनात्र ऋतव उच्यन्ते[3] । तेन रश्मिस्थानीयाः सप्तर्तवः[4], सहस्राक्षः[5] = अनन्तसंख्याकाहोरात्रयुक्तः, अजरः = जरारहितः सर्वदा एकरूपः, किञ्च भूरिरेताः = प्रभूतजगत्सर्जनसमर्थशक्तिसम्पन्नः, एवंविधः कालो वहति प्राणिजातं स्व-स्वकर्मसु प्रापयति । तं परिच्छिन्नं कालं क्रान्तदर्शिनो विपश्चित आरोहन्ति स्वाधीनं कुर्वन्ति । कालात्मकस्य रथस्य च चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि लोकान् अभिगच्छन्तीति ।

आदित्यपक्षे तु--कालात्मकोऽश्वः सूर्यो विद्यते । यतो हि निर्वचनानुसारम् अश्वः स वक्तव्यो भवति यो हि अश्नुतेऽध्वानम्, अर्थाद् विस्तीर्णं मार्गं व्याप्नोति उत वा महाशनः = अतिभोजनो भवतीति[6] । द्वावपीमौ गुणौ आदित्यस्यापि वर्तेते, यतो हि अयमादित्यो विस्तीर्णमन्तरिक्षमार्गं व्याप्नोति, एवञ्च महाशनोऽपि भवति, ज्योतिषां भासं रसांश्च प्रतिदिनमादत्ते हि सः । अत एव यास्केनोक्तम्—'आदित्यः कस्माद् आदत्ते रसान् ? आदत्ते भासं ज्योतिषाम्'[7] ।

१ अथर्ववेदे—१९.५३.१ सायणभाष्यम्;        २. तत्रैव--१९.५३.१ ।

३. 'रश्मिर्यमनात्' ( नि० २.५ ) इति निर्वचनानुसारम् ऋतवोऽपि रश्मयः प्रकृतिचक्र-नियमनात् ।

४. सप्तर्तुः--एकैकर्तुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः ।

५. अत्र अक्षिशब्देन दिनानि रात्र्यश्च उच्यन्ते ।

६. निरुक्तम्—२.७;        ७. तत्रैव—२.१४ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कालात्मकस्य अश्वभूतस्यादित्यस्य सप्तरश्मयः आरोग-भ्राज-पटर-पतङ्ग-स्वर्णर्-ज्योतिषीमान्-विभासाख्या[१] अपरिदृश्यमानाः सप्तसूर्यरूपाः सन्ति। किञ्च, सहस्राक्षः अक्षिवत् सहस्राणि अक्षीणि किरणरूपाणि सन्ति यस्य असौ कालात्मकोऽविनश्वर आदित्यो नैकविधकिरणजालैर्युक्तः अप्तत्त्वधारकः[२] सन् ब्रह्माण्डस्य गतिचक्रं वहति धारयति। तं कालात्मकं सूर्यं विबुधाः स्वात्मभावेन अधितिष्ठन्ति। तथा च श्रुतिः—

'तद् योऽहं सोऽसौ योऽसौ सोऽहमिति'[३]। 'योसावादित्ये पुरुषः सोऽसावहम्'[४]।

कालसूक्तस्य द्वितीयमन्त्रे अपरिच्छिन्नकालस्य परिच्छिन्नात्मकं संवत्सराख्यस्वरूपं वर्णितमस्ति[५]। मन्त्रे प्रतिपादितं यत् संवत्सररूपात्मकस्य कालस्य चक्राणि अर्थाद् गतयो मुख्यतया सप्तधा वर्तन्ते। ताश्च चक्रगतयः—वसन्त-ग्रीष्म-शरद्-हेमन्त-शिशिर-अधिमासरूपाः सन्ति। सर्वजगत्कारणभूतः काल एतान् ऋतून् अनुक्रमेण वहति = धारयति। अस्य संवत्सराख्यकालस्य सप्तनाभयः अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसन्धिकालाः सन्ति। सप्तचक्रच्छिद्रेषु प्रोतः अनुस्यूतोऽक्षः सत्यम् अबाध्यं तत्त्वमस्ति। पूर्वोक्तसंवत्सररूप आदिभूतो देवो नित्यज्ञानरूपः काल इमानि नामरूपात्मना व्याकृतानि सर्वाणि चराचरात्मकानि भुवनानि अञ्जन् व्यक्तीकुर्वन् स्वेन कालेन परिच्छिन्नानि कुर्वन् उत्पादयन् स एव स्यति–संहरतीति च। एवंविधः संवत्सराख्यः काल ईयते गच्छति सर्वमावृत्य वर्तते च।

अध्यात्मपक्षे तु—कालः कलयिता सर्वसृष्टिव्यापारकर्ता मायोपहितचैतन्यो देवः सप्तचक्रान्—जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति मुच्यत इति सप्तविकारान् धारयति। अस्य सप्तनाभयः सप्तावस्थासन्धिकालाः सन्ति। किञ्चामृतं चैतन्यम्—सूक्ष्मत्वचैतन्यादिगुणविशिष्टोऽयं कालः सृष्टिभूतेष्वनुगतः सन् सर्वाणि प्राणिजातानि अञ्जत् प्रेरयन् ईयते तत्त्वज्ञैर्ज्ञायते।

कालसूक्तस्यापरस्मिन्मन्त्रे अपरिच्छिन्नकालस्यातिविस्तीर्णत्वं परिच्छिन्नकालस्याहोरात्र-पक्ष-मासर्तु-संवत्सरादिरूपस्य पूरितकुम्भसदृशत्वमुक्तम्[६]। यथाऽ-

---

१. तै० आ० १।७।१।

२. उदकवाची रेतशब्दः। 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति'। (तै० २।४।१०।२)

३. ऐ० आ० २।२।४; ४. मा० स० ४०।१७।

५. सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः। स इमा विश्वा भुवना न्यञ्जत् कालः स ईयते प्रथमो नु देवः॥ (अथर्व० १९।५३।२)

६. पूर्णः कुम्भोऽधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तम्।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन्॥ (अथर्व० ३१९।५३।)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नन्तजलराशेः सकाशाद् घटे जलपूरणं क्रियते, तथैव अपरिच्छिन्नकालतः परिच्छिन्ने संवत्सराख्ये कालकुम्भे अहोरात्र-पक्ष-मासर्तु-संवत्सररूपा राशयः प्रपूर्यन्ते, अतश्च परिच्छिन्नात्मकः कालः पूर्णकुम्भसदृशो भवति। अनयोरपरिच्छिन्न-परिच्छिन्नकालयोर्वनवृक्षयोरिव जलाशय–जलगतप्रतिविम्बाकाशयोरिव वाऽभेदः। अतः परिच्छिन्नकालोऽपि इमानि परिदृश्यमानानि विश्वानि भुवनानि तदन्तर्वर्तिप्राणिजातानि व्याप्नुवन् भवति। विद्वांसः कालतत्त्वरहस्यं ज्ञात्वा परिच्छिन्नकालतोऽपरिच्छिन्नकालाभिमुखम् उपासनामार्गेण समुपसरन्ति।

'कालः' अस्य सृष्टिप्रपञ्चस्य मूलाधारः चिच्छक्तिभूतश्च विद्यते। अत एव कालसूक्ते चतुर्दशभुवनगतानां प्राणिजातानां सर्जकत्वेन पोषकत्वेन च कालः स्मृतो विद्यते[1]। कालः स्वमहिम्ना पितृरूपेण तदनन्तरञ्च पुत्ररूपेण व्यवहृतो भवति। यतो हि यः पूर्वजन्मनि पितृत्वेन जातः, स एवास्मिन् जन्मनि पुत्रत्वेन व्यवहृतो भवति, अवच्छेदककालाधीनत्वात् सर्वस्य। अथवा एकस्मिन्नेव जन्मनि पिता पुत्ररूपेण सम्भवति। अत एवोक्तम्—

"अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे।
आत्मा वै पुत्रनामासि स जीव शरदः शतम्"॥ इति।

अन्यस्मिन्मन्त्रे उक्तं यत् कालः परमात्मा विप्रकृष्टं द्युलोकं परिदृश्यमानं च अमुं पृथिवीलोकम् उत्पादितवान्[2]। काल एव भूतम्, भविष्यत्, इष्टम्–इष्यमाणं वर्तमानकालावच्छिन्नं च सर्वं विशेषेणाश्रितं वर्तते। मन्त्रान्तरे कालस्य महिमानं वर्णयता प्रतिपादितं यत् कालरूपः परमात्मा एव जागतिकानि ऐश्वर्याणि सर्जयति, काले प्रेरके सति सूर्यः स्वप्रकाशेन जगत् प्रकाशयति, कालाश्रयत्वेन सर्वे प्राणिनः सत्तां लभन्ते, कालावच्छिन्नसृष्टौ च सर्वेन्द्रियाधिष्ठाता चक्षुष्मान् पुरुषः स्वस्वेन्द्रियव्यापारं करोति[3]।

काले परमात्मनि जगत्सिसृक्षानिमित्तभूतं मनो वर्तते, तस्मिन्नेव च सूत्रात्मा सर्वजगदन्तर्यामी 'प्राणः' वर्तते। समेषां जागतिकपदार्थानां संज्ञाव्यवहारः कालेनैव भवति, काल एव च लयं याति। कालेन पदार्थानां सत्ता स्थाप्यते, तेषां नानाविधाः

---

१. स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्।
पिता सन्नभवत् पुत्र एषां तस्माद् वै नान्यत् परमस्ति तेजः॥ (अथर्व० १९।५३।४)

२. कालोऽमूं दिवमजनयत् काल इमाः पृथिवीरुत।
कालो ह भूतं भव्यं चेषितं ह तिष्ठते॥ (तत्रैव— १९।५३।५)

३. कालो भूतिमसृजत काले तपति सूर्यः।
कालो ह विश्वा भूतानि काले चक्षुर्विपश्यति॥ (तत्रैव—१९।५३।६)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

संज्ञाश्चोत्पाद्यन्ते। किम्बहुना, वसन्तादि-ऋत्ववच्छिन्नकाले समुपस्थिते सति सर्वा इमाः प्रजाः स्वस्वकार्यसिद्धिद्वारा नन्दन्ति सन्तुष्यन्ति च[१]।

परतत्त्वभूते काले तपः, अर्थाद् जगत्सर्जनविषयं पर्यालोचनम्[२] अभिव्याप्तमस्ति। अस्य ब्रह्माण्डस्य ज्येष्ठमादिभूतं हिरण्यगर्भाख्यं तत्त्वं काल एव समाविष्टम्। किञ्च, सृष्ट्युपबृंहकस्य शाब्दस्य ज्ञानतत्त्वस्याश्रयोऽपि 'काल' एव। अत एव कालः सर्वस्य जगत ईश्वरो नियन्ता भवति, एवञ्च मायोपहितचैतन्यस्य प्रजापतेरपि पितृस्थानीयो भवति[३]।

कालेन इदं जगत् स्रष्टव्यं भवति, तेनैव च उत्पादितम्। परिच्छिन्नकालोपहितं भूत्वा इदं जगद् अन्ततोऽपरिच्छिन्ने काल एव प्रतिष्ठितं भवति। अयमेव कालो देशकालावच्छिन्नं सच्चित्सुखयितृरसम् अबाध्यं परमार्थतत्त्वं भूत्वा परमे स्थाने सत्यलोके तिष्ठन्तं चतुर्मुखं ब्रह्माणं धारयति[४]।

सृष्ट्यादौ स्वयम्भूः ( स्वयमेवात्मना भवतीति स्वयम्भूः ) कालद्वारा ब्रह्मणः सृष्टिः कश्यपाख्यस्यादित्यस्य चोत्पत्तिर्भवति। अत्रेदमवधेयं यत् परिदृश्यमानमिदं तेजः 'कश्यप'संज्ञां धत्ते, यतो हि अयमादित्यः समग्रभूमण्डलस्य पश्यको वर्तते। निरुक्तदिशा च 'पश्यक' एव 'कश्यपः'[५]।

सर्वजगत्कारणभूतेन कालाख्यपरतत्त्वेन ब्रह्माण्डाधारभूता आपः समभवन्[६]। अत्रेदं पर्यालोचनीयं यद् वैदिकविज्ञानानुसारं मूलतत्त्वेनोत्पादितं अप्तत्त्वं परमार्थतः चतुष्प्रकारकं विद्यते चतुर्षु लोकेषु च अभिव्याप्तमस्ति। तानि च—अम्भ–मरीचि–भर्–आप–रूपाणि। तत्र अम्भस्संज्ञकम् अप्तत्त्वं तद् विद्यते यत् सूर्यमण्डलादूर्ध्वलोकेषु द्युलोकापरपर्यायेषु 'महः', 'जनः' इत्यादिसंज्ञया व्यवह्रियमाणेषु व्याप्तं भवति। आन्तरिक्षस्थानेषु यदप्तत्त्वमभिव्याप्तं तन्मरीचिरूपम्। पृथिव्याम् उर्वरशक्तिजनकं यदप्तत्त्वं तद् 'भर्' इति नाम्ना, एवञ्च भूमण्डले प्रवहमाणं नद्यादिजलम्, वापीकूपादि-

---

१. काले मनः काले प्राणः काले नाम समाहितम्।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः॥ ( अथर्व० १९।५३।७)

२ तप पर्यालोचने। 'तपसा चीयते ब्रह्म' इत्यादौ तपःशब्दः पर्यालोचनत्वेन व्याख्यातः।

३. काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम्।
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः॥

४. तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितम।
कालो ह ब्रह्म भूत्वा विभर्ति परमेष्ठिनम्॥

५. 'कश्यपः पश्यको भवति यत् सर्वं परिपश्यतीति सौक्ष्म्यात्'। (तै० आ० १।८।८)

६. कालादापः समभवन् कालाद् ब्रह्म तपो दिशः।
कालेनोदेति सूर्यः काले निविशते पुनः॥ (अथर्व० १९।५४।१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

श्वभ्रात्प्राप्यमाणं जलम् 'आपः' इति संज्ञया व्यवहृतं भवति[1]। चतुर्ष्वप्येतेषु प्राथम्येन परिगणितम् अम्भोरूपं सूक्ष्मं जलतत्त्वमेव मूलभूतं वर्तते, तदेव च पञ्चीकृतं सत् तत्त्वान्तरसम्मिश्रणेन स्थूलरूपे परिवर्तितं भवति। कालेन अप्तत्त्वस्योत्पत्तिर्विहिता प्राच्याद्या दिशश्च सृष्टाः। कालेन प्रेरकेण सूर्य उदेति तदनन्तरं चावच्छिन्ननियतकाले समुपस्थिते अस्तमेति च। अत एवोक्तं श्रुतौ—'भीषास्माद् वातः पवते भीषोदेति सूर्यः'[2]। कालेनैव वायुः पवते, महती चेयं पृथ्वी तस्यैव प्रभावाद् नियताक्षांशे आधारे निहिता विद्यते[3]। किम्बहुना, कालतत्त्वस्य प्रभावादेव सर्गप्रकृतौ शाश्वतं भाव्यमानः प्राकृतो यज्ञः स्वयमेव भवति[4], तथा वैकृतो यज्ञः इष्टि-पशु-सोमयागादिरूपो मनुष्यैः क्रियमाणोऽपि समुत्पद्यते।

एवञ्च कालतत्त्वस्योपासनया सर्वकर्मार्जनस्थानरूपो भूलोकः, फलभोगस्थानरूप आमुष्मिकः स्वर्गलोकः, अनन्तानन्तपुण्यकर्मभिरर्जनीयाः सत्यादिलोका अभिजिता भवन्ति[5]। सोऽयं कालो देशकालवस्तुपरिच्छेदरहितेन सत्यज्ञानानन्तत्वादिलक्षणेन परमात्मना स्वरूपेण अभिव्याप्य वर्तते।

यथा परात्परतत्त्वं निर्गुण-सगुणरूपेण प्रतिभासितं भवति, तथैव अनवच्छिन्नकालः, अवच्छिन्नकालात्मकतया 'संवत्सर' इति संज्ञयाऽभिहितो भवति। कालसूक्तानुसारं गतिमान् काल एव आदित्यरूपेण नभोमण्डले विभाति। सूर्यमण्डलतो यावती ज्योतिः (ऊर्जा) नैरन्तर्येण भूमण्डले समागच्छति सा 'वैश्वानर' इति संवत्सराग्निर्वेति पदेन व्यपदिश्यते। एकस्मिन् वत्सरे सौर-ज्योतिषो यावान् भागो भूमौ प्राप्यते, तावान् भाग एकः 'संवत्सराग्निः' इति पदेन व्यवह्रियते। 'यथा अण्डे तथा पिण्डे' इति नियमानुसारमस्माकं शरीरेऽपि "वैश्वानराग्निः" विराजितो वर्तते। अत एवोक्तम्—'विश्व एनं नरा नयन्तीति। अपि वा विश्वानर एव स्यात्। प्रत्यृतः सर्वाणि भूतानीति'[6]। अयं खलु वैश्वानराग्निः सौरज्योतिष एवैको भागः। यज्ञमाध्यमेन यजमानशरीरस्थं वैश्वानराग्निं संस्कृत्य सूर्यमण्डलस्य पृथ्वीव्यापिना संवत्सराग्निना सह मेलनमेव यज्ञस्योद्देश्यम्।

---

१. 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन'....। स ईक्षत लोकान्नु सृजा इति। स इमांल्लोकानसृजत अम्भो मरीचिर्मर आपः। अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः पृथिवी मरः, या अधस्तात् ता आपः'....। (ऐ० उ० ४।१)

२. तै० आ० ८।८।१।

३. कालेन वातः पवते कालेन पृथिवी मही। द्यौर्मही काल आहिता॥

४. कालो यज्ञं समैरयद्देवेभ्यो भागमक्षितम्। (अथर्व० १९।५४।४)

५. इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः। सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः॥ (अथर्व० १९।५४।५)

६. "विश्वानि ह्यसौ भूतानि प्रति ऋतः प्रविष्टः"। (निरुक्तम्—७।६)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

येन मेलनेन व्यष्ट्युपहितः संवत्सराग्निः स्वीये उद्भवस्थाने सूर्यमण्डले स्वर्लोके वा गन्तुं प्रभवति, अपरिच्छिन्ने च कालतत्त्वे समाहितुं शक्नोति । तच्च 'काले तपः' (१९।५३।८) इत्येवं श्रुतावुपदिष्टम् । संवत्सरस्य लघुविभागो वैदिकपरिभाषानुसारं लोकव्यवहारानुसारञ्च 'अहोरात्र'पदवाच्यः । एकस्मिन् संवत्सरे षष्ट्युत्तरत्रिशतानि अहोरात्राणि भवन्ति । संवत्सरस्य द्वितीयो विभागः 'मास'पदवाच्यः । एकस्मिन् संवत्सरे द्वादशमासा भवन्ति । तृतीयो विभागः कृष्ण-शुक्लेति नाम्ना पक्षद्वयात्मको विद्यते । एकस्मिन् संवत्सरे चतुर्विंशतिपक्षा भवन्ति । चतुर्थो विभागः ऋतुक्रमेण वर्तते । यद्यपि षड्-ऋतवः परिसंख्याताः, परं प्रधानतया ग्रीष्म-वर्षा-शरद्-वसन्ताख्याः चत्वारि एवर्तवः । मासत्रयात्मकत्वाद् एकैकर्तोः संवत्सरस्य ऋतुक्रमेण चतुर्धा विभागः । पञ्चमो विभागः अयनक्रमेण विद्यते । प्रत्येकं संवत्सरे मासषट्कं यावत् सूर्यो विषुवद्वृत्तत उत्तरभागे, मासषट्कं च दक्षिणभागे भवति । आभ्यां गतिभ्यां पूर्णः संवत्सरो दक्षिणायनोत्तरायणभेदेन द्विधा विभज्यते । संवत्सरस्य षष्ठो विभागः पूर्णात्मकः, यो हि एक एव ।

परिच्छिन्नकालात्मकसंवत्सरस्यैषामणिष्ठ-वर्षिष्ठविभागानां संस्कारः, उत वा शुद्धिपूर्वकमुपासनं यज्ञमाध्यमेन विधीयते, तदनुगुणतया च यजमानः स्वशरीरस्थं वैश्वानराग्निमपि संस्करोति । तत्र अग्निहोत्रहोमेन परिच्छिन्नकालात्मकसंवत्सरस्य यो हि अहोरात्ररूपो विभागस्तस्य संस्कारो भवति, अत एवोक्तम्—सायं प्रातर्जुहोतीति । दर्शपूर्णमासयागेन पक्षाणां पिण्डपितृयज्ञेन मासानाञ्च संस्कारः सम्पद्यते । चातुर्मास्य-यागेन ऋतुविभागानां संस्कारः, किञ्च आग्रायणेन पशुबन्धयागेन च दक्षिणायनोत्तरायणे संस्कृते भवतः । एतदनन्तरं सोमयागानुष्ठानेन पूर्णस्य संवत्सरस्य संस्कारः सम्पाद्यते । सहस्रसंवत्सरसत्रादिभिश्च महाकालस्योपासनमिति याज्ञिकदर्शनम् ।

एभिर्यागानुष्ठानैः काल-संवत्सरस्य संस्कारमुखेन व्यष्ट्युपहितः शरीरस्य वैश्वानराग्निरपि संस्कारयुक्तो भवति । एवञ्च मृत्युकाले यजमानस्य पार्थिवं शरीरं विहाय "वैश्वानराग्निः" आदित्यमण्डले ( सूर्य-संवत्सरे ) सायुज्यं लभते । अत एवोक्तं मन्त्रे—"वैश्वानरो यतते सूर्येणेति[1]" । किञ्च, "विश्वान्नराान्नयतीति"[2] निरुक्तिरपि एवंविधानेन संघटते । अनेनैव चापरिच्छिन्नकालतत्त्वाश्रयणेन स्वर्गसुखादिमोक्षप्राप्ति-र्भवति ।

अतो वैदिकी यज्ञोपासना परिच्छिन्नकालतोऽपरिच्छिन्नकालतत्त्वं प्रति नयतीति शम् ।

●

---

१. वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ।। (ऋ० १।९८।१) ।

२. निरुक्तम्—७।६ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# वैदिकस्वरे केचन विमर्शाः

डॉ० सुधीरकुमारगुप्तः,
निदेशको भारतीमन्दिरानुसन्धानशालायाः
वेदसदनम्, विश्वविद्यालपुरी,
जयपुरम्

❀❀❀

पातञ्जलमहाभाष्यस्य रचनाकालं यावत् खलु वैदिकस्वराणां साहाय्येन वेदमन्त्राणां भाष्यकरणस्य परिकल्पः सिद्धान्तरूपेण सुप्रतिष्ठितोऽभूत्, अतः पतञ्जलिः परिकल्पस्यास्य समर्थने 'इन्द्रशत्रु–स्थूलपृषती'-शब्दावुदाजहार। इन्द्रशत्रुविषयकमाख्यानं शतपथतैत्तिरीयब्राह्मणयोरप्युपलभ्यते[२]। परं ब्राह्मणकाराविमौ तु आख्यानमिदमक्षरविशेषे उदात्तस्वरस्थित्या प्रत्यक्षं न सम्बध्नीतः। प्रातिशाख्यैः पाणिनिना च प्रदत्तास्त्रयाणां स्वराणां परिभाषा उच्चारणमेव लक्ष्यीकुर्वन्ति, अर्थदृष्ट्या पदानां वा तेषामक्षराणां वा उदात्तादिस्वराश्च सम्बन्धं नोद्दिशन्ति। एताः परिभाषाः— १. उच्चैरुदात्तः,[३] २. नीचैरनुदात्तः,[४] ३. समाहारः स्वरित[५] इति सन्ति। प्रातिशाख्येषु चाष्टाध्याय्यां च प्रदत्तानां स्वरविषयकाणां नियमानां भूयिष्ठा संख्या पदानामर्थमनपेक्ष्यैव प्रवृत्ताः सन्ति। चितः[६], ञ्नित्यादिर्नित्यम्[७], कर्षात्वतो घञोऽन्त उदात्तः[८], कितः,[९] लिति,[१०] उञ्छादीनां च[११]—इत्यादीनि सूत्राणि ग्रन्थेष्वङ्कितानां स्वराणामेव विवरणरूपं व्याख्यानं कुर्वन्ति। तृच्तृन्प्रत्ययौ यथा कर्त्तेति पदम्, तथैव अर्थेऽभिन्नानि समानरूपाणि पदानि निष्पादयतः। क्रियाणाञ्चामन्त्रितपदानाञ्च स्वरविधायका नियमाः केवलं वाक्य एव तेषां पदानां स्थितिं निरूपयन्ति, तेषामर्थान् नाभिव्यञ्जयन्ति।

वेङ्कटमाधवस्योक्तिः—

अर्थभेदेन तु शब्दस्य सर्वत्र सदृशः स्वरः।
यत्र न तं स्वरं पश्येदन्यार्थं तदानयेत्[१२]॥

---

१. महाभाष्ये १।१।१ इत्यत्र दुष्टः शब्द इति चासन्देह इति च विवरणयोः।
२. शतपथब्राह्मणे, १।६।३।८-१०, तैत्तिरीयब्राह्मणे—२।५।४।४।
३. पाणिनेरष्टाध्याय्याम्—१।२।२९।
४. तत्रैव—१।२।३०; ५. तत्रैव—१।२।३१; ६. तत्रैव—६।१।१६३।
६. तत्रैव—६।१।१९७; ८. तत्रैव—६।१।१५९; ९. तत्रैव—६।१।१६५।
१०. तत्रैव—६।१।१९३; ११. तत्रैव—६।१।१६०; १२. ऋगर्थदीपिकायाम्—१।८।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ज्ञापयति यद् यत्र स्वरः परिवर्त्तते, तत्र सम्बन्धितपदस्यार्थोऽप्यवश्यमेव परिवर्तनीयो भवति। भङ्ग्यन्तरेणेयमुक्तिः सूचयति यदर्थे भेदः स्वरभेदं निर्दिशति। एतत् तथ्यैर्न प्रमाणीभवति। यास्कीयनिघण्टौ विभिन्नेष्वर्थखण्डेषु बहुसंख्यकान्येतादृशानि पदानि पठितानि सन्ति, येषां स्वरस्तु सर्वत्र स एव, परमर्थे भेदो जायते। एतादृशानि कानिचित्पदानि आपः, अदितिः, इळा, गौः, वयुनम्, हरितः प्रभृतीनि सन्ति। स्वरभेदो नियतमेवार्थे भेदं न निर्दिशति। कर्तृ-कृष्ण-जठरप्रभृतयो बहवः शब्दा द्विविधं स्वरं धारयन्ति, परं तेषामर्थस्तु स्वरनिरपेक्षः सन् प्रायेण सर्वत्र स एवोपलभ्यते। एतादृशेषु पदेषु स्वरे भेदस्तु केवलं पाणिनिना निर्धारितानां नियमानामालोके तेषां पदानां व्याकरणविषयकां निष्पत्तिं निर्दिशति।

समासयुक्तेषु पदेष्वकितेनोदात्तस्वरेण तत्रस्थस्य समासस्याभिज्ञानस्य महत्त्वातिशयं प्रतिपाद्यते स्वरशास्त्रविद्भिः; परन्तु समासानां स्वरविषये पाणिनिना प्रदत्तानां नियमानां विश्लेषणं ज्ञापयति यत् ते नियमाः पूर्णाश्च निरपवादाश्च न सन्ति। बहुव्रीहिसमासस्य पूर्वपदप्रकृतिस्वरत्वं[1] केषुचन तत्पुरुषेषु च द्वन्द्वेषु च समासेष्वप्युपलक्ष्यते[2]। बहूनां बहुव्रीहिसमासानामुदात्तः स्वरः पूर्वपदप्रकृतिस्वरत्वात् परिवर्तते, तत्पुरुषसमासानां विशिष्टं स्वरत्वं च भजते। समासस्य प्रकृतिं ज्ञातुं व्याकरणस्य नियमाः प्रकरणादयश्च साहाय्यं विदधति, ततः परं समासाभिज्ञानानुरूपं स्वरस्य व्याख्यानं प्रस्तूयते। एतेभ्यः साहाय्येभ्यो वियुक्त एकाकी स्वर एव भ्रामको भवति, समासस्य प्रकृतेवार्थस्य वा ज्ञाने किमपि साहाय्यं न करोति।

अरि–अर्य–वेदस्–आशा–कृष्णप्रभृतयः केचन शब्दा द्विविधं स्वरं तदनुसारं चार्थद्वयं वहन्ति। अस्मिन् प्रसङ्ग एतानुदाहृत्य स्वरेण सहार्थस्य परिवर्तनं प्रदर्श्य तयोरनिवार्यः सम्बन्धः प्रतिपाद्यते स्वरविवेचकैः। परमत्रापि सर्वत्र प्रकरणमेवार्थस्य निदाने साहाय्यं करोति। कृष्णेति शब्दः केषुचन स्थलेषु त्वाद्युदात्तोऽस्ति, केषुचित्स्थलेषु चान्तोदात्तः। अस्य पदस्य व्याख्याने प्रायेण सर्वत्रैव 'कृष्णस्य मृगाख्या चेत्'[3]—इति फिट्सूत्रमुपेक्ष्य भाष्यकाराः कृष्णवर्णेत्यर्थं कर्तुं विवशाः संजाता दृश्यन्ते। एतादृशानां पदानां पर्याप्ता संख्या खल्वनुसन्धातव्या यत्र प्रकरणादेरभावे केवलं स्वर एवार्थनिर्धारणे साहाय्यं विदधाति।

पाणिनिनियमेष्वेकश्रुतिः—"दूरात्सम्बुद्धौ[4]" इति, "यज्ञकर्मण्यजपन्यूङ्खसामसु"[5] इति, "विभाषा छन्दसि[6]" इति प्रभृतीनि सूत्राणि प्रत्यक्षत एव स्वर-

---

१. तुलनीयम्—बहुव्रीहौ प्रकृत्या पूर्वपदमिति पाणिनेरष्टाध्याय्याम्, ६।२।१।

२. तत्रैव—६।२।२-१८, २१-६३ इति सूत्राणि द्रष्टव्यानि।

३. फिट्सूत्रम्—११;

४. पा० सू०—१।२।३३।

५. तत्रैव—१।२।३४;

६. तत्रैव—१।२।३५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शब्दार्थयोः सम्बन्धं बाधन्ते, यत आसु स्थितिष्वपि स्वरेण विनैव पदानां पाठानां चेत्यादानीं वक्तृश्रोतृभ्योऽर्थावबोधः सम्यग् भवति।

सुब्रह्मण्यनिगदस्य स्थितिस्तु विशिष्टा च स्वीयैव चास्ति। 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' इति सूत्रेण स्वरितस्योदात्तत्वञ्च, पाणिनेरत्र सूत्रे[1] 'अमुष्येत्यन्तः' इति वार्तिकेन दाक्षेः प्रभृतिषु पदेषूदात्तस्वरस्य मूलस्थितिं परित्यज्याक्षरान्तरे संक्रान्तिश्च, 'अनुदात्तं पदमेकवर्जम्'[2] इति सूत्रं विरुध्य पाणिनेः १।२।३७-३८ सूत्राभ्यां तत्रस्थवार्तिकमहाभाष्यवाक्यैश्च यथा विहितम्, तथैकाधिकोदात्तस्वरयुक्तशब्दानां स्थितिश्च बोधयन्ति, यत्प्रकृतशब्दानामर्थस्य प्रकाशने स्वरस्य कोऽपि योगो नास्ति, यद्येतन्न प्रतिपाद्यते यत्सुब्रह्मण्यनिगदस्य भाषा प्रकृत्यैकाक्षरा वर्तते; परन्तु तत्रापि सम्प्रति विद्यमानोदात्तस्वरस्य योगोऽपि बहुषु स्थलेषु विचारणीयो भविष्यति।

'अनुदात्तं पदमेकवर्जम्[3]' इत्यत्रस्थैरन्यैर्वार्तिकैः सह 'सति शिष्टस्वरबलीयस्त्वञ्च' इति वार्तिकमुदात्तस्वरस्य क्रमेणाक्षरादक्षरं प्रति संक्रमणं विधाय स्वरमेतं मूकं द्रष्टारं सम्बन्धितपदस्यार्थस्य प्रकाशनेऽनुपयोगिनं च निष्पादयति।

पाणिनिकात्यायनोर्विधानेन केषुचित् पदेषूदात्तः स्वरः प्रथमे, द्वितीये, अन्तिमे वाक्षरे विकल्पेन ( पदस्य स्वरस्य च प्रयोक्तुः स्वेच्छया ) भवेत्[4]। यदि कस्यचित्पदस्यार्थनिर्णये स्वरस्य कोऽपि योगोऽस्ति तर्हि विशिष्टार्थबोधने तस्मिन् पदे सर्वत्रैकस्मिन्नेव निर्धारितेऽक्षर एवोदात्तस्वरेण भाव्यम्। यतः सम्बन्धितपदानामर्थे कमपि भेदमविधायोदात्तस्वरस्य स्थितौ विकल्पस्य विधानं कृतमस्ति, अतोऽस्यायं स्वाभाविको निष्कर्षोऽस्ति यदुदात्तस्वर एवंविधानां पदानामर्थस्य निर्णये कमपि योगं नावहति।

पाणिनेः सूत्रेषु कानिचित् पाषाणभूतसूचनातत्त्वान्यपि विद्यन्ते, यानि द्योतयन्ति यत्तदा स्वराङ्कनस्य विभिन्नाः पद्धतयोऽवर्तन्त। 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्'[5] इति सूत्रं ज्ञापयति यत्केचन वैयाकरणाः स्वरितस्य सत्तां नाङ्गीकुर्वन्ति स्म। वेति चान्यतरस्यामिति च बहुलमिति च शब्दैरुदात्तस्य प्रथमे, द्वितीये अन्तिमे वा पदस्याक्षरे वैकल्पिकस्थितेर्विधानं सम्भवतो विभिन्नानामाचार्याणां वा देशस्य विभिन्नभागेषु वा प्रचलितान्युच्चारणान्यनुसृत्य विभिन्नानामक्षराणामुदात्तीकरणं लक्षयति तावद् यावदेतन्न प्रतिपाद्यते यत्स्वरभेदेन तेषां पदानामर्थोऽपि परिवृत्तिं सहते। 'नित्यं मन्त्रे[6]' इति सूत्रेण 'अर्पिते'ति पदेनाद्युदात्तेनैव मन्त्रेषु

१. पा० सू०—१।२।३७; २. तत्रैव—६।१।१५८; ३. तत्रैव।

४. यथा पा० ६।१।१६९, १७७, १७८, १८१, २०८ इत्यादीनि सूत्राणि द्रष्टव्यानि।

५. तत्रैव—८।४।६७; ६. तत्रैव—६।१।२१०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवितव्यम्। ऋग्वेदे मन्त्रमेकं विहाय सर्वत्रान्यत्रेदमाद्युदात्तमेवास्ति[१]। तस्मिन् मन्त्रे[२] पदमिदमन्तोदात्तमस्ति। अस्य समाधानं 'जुष्टार्पिते च छन्दसि'[३] इति सूत्रेण विधातुं न सम्भवति यतोऽनुपदमेवात्रोदाहृतेन 'नित्यं मन्त्रे'[४] इति सूत्रेण परवर्तिना सतेदं सूत्रं बाध्यते। 'परादिश्छन्दसि' इति सूत्रम्, तत्र चेयं कारिका—

'परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः'॥

तथा च 'व्यत्ययो बहुलमिति[५]' पाणिनिसूत्रेण विहितो स्वरस्य व्यत्ययः—एतत्सर्वं निरूपयति यत्सम्भवतः स्वकीयोच्चारणपद्धतिप्रकाशे प्रकृतशब्दानामर्थानुपेक्ष्यैव पदेषूदात्तस्वरस्य स्थितिविषये वैयाकरणा भिन्नमतय आसन्।

सर्वेषु भाष्यकारेषु केवलमयं सायण एव यो वैदिकपदेषु वर्तमानस्य स्वरस्य स्वकृतेन तेषां पदानामर्थेन सह सङ्गतिं प्रदर्शयति। बहुधा स स्वरे व्यत्ययोऽस्तीति घोषयितुं बाध्यो भवति। अन्यैर्भाष्यकारैरपि पदगतवर्तमानोदात्तस्वरेणाननुगतं व्याख्यानमनेकत्र प्रदत्तमस्ति।

प्रस्तुते प्रसङ्गे वैदिकभाषायां स्वराणामुत्पत्तेरैतिहासिकं पर्यवेक्षणमप्युचितमस्ति। स्वरेति पदं संहितासु, ब्राह्मणेषु चोपनिषत्सु चोदात्तादिस्वरान् न बोधयति। त्रयाणां वैदिकस्वराणां नामानि सर्वप्रथमं तु गोपथब्राह्मणे[६] चतसृषु संहितासु प्रणवस्य वा 'ओमि'ति पदस्य वोच्चारणप्रसङ्गे प्रयुक्तानि सन्ति। अस्मिन् वर्णनेऽस्मिन् पदे सार्धचतस्रो मात्रा निर्धारिताः सन्ति, यासां ध्यानं भिन्नानि भिन्नानि फलानि ददाति। तासां मात्राणां वर्णा अप्यत्र निर्दिष्टाः सन्ति। अस्मिन् वर्णने 'ओम्' इति पदस्यार्थविधाने किमपि प्रासङ्गिकं नास्ति।

काश्चनात्यर्वाचीना उपनिषदः—आत्मेति[७] च, प्रणवेति च[८], सूर्यतापिनीति च[९], गायत्रीरहस्येति[१०] चोपनिषद उदात्तानुदात्तयोर्नामानि प्रयुञ्जते। अत्र कुत्राप्येते स्वरनामनी पदानामर्थनिर्धारणेन न सम्बद्धे स्तः।

---

१. द्रष्टव्यऋग्वेदे—१।१४२।९, १६४।१२; ६।५८।१; ९।८६।१४, ३९, ४५; १०।८२।६, १७०।१;
२. तत्रैव—१।१६४।४८।
३. पा० सू० ६।१।२०९;
४. तत्रैव—६।२।१९९।
५. पा० ३।१।८५;
६. गोपथब्राह्मणे—१।१।२५।
७. आत्मोपनिषदि १, पृष्ठे ४५१-तमे 'उदात्तानुदात्तह्रस्वदीर्घप्लुतः' इति लभ्यन्ते।
८. प्रणवोपनिषदि, ३५।८ इत्यत्र उदात्तमित्यस्ति।
९. सूर्यतापिन्युपनिषदि, १।२९ स्थले 'उदात्तस्वरः' इत्यस्ति।
१०. गायत्रीरहस्योपनिषदि, ४०६:१४ इत्यत्र 'उदात्तादिस्वरात्मिका' इति मिलति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतदपि ज्ञातव्यमस्ति यत्पाणिनिः प्रायेण द्वाशीतिसूत्रेषु[१] उदात्तं कैश्चिद् विशिष्टैरर्थैर्योजयति। एषु बहूनां सम्बन्धः समासजन्यपदैः, क्रियाभिः, सम्बोधनपदैः, वाक्यैश्चास्ति। केवलं शुक्लयजुर्वेदप्रातिशाख्यमेव नवसंख्याकेष्वेव सूत्रेषु[२] प्रकृतैः पदैः प्रकाशितैरर्थैः सहोदात्तं स्वरं योजयति। किमप्यन्यत् प्रातिशाख्यं तत्परिधौ समागतानां पदानामर्थप्रकाशनेन सहोदात्तादिस्वरान् न सम्बध्नाति।

एतदपि स्वीकृतमस्ति यद्वैदिकभाषाया अवगमाय स्वरास्तथैव सार्थकाः सन्ति, यथा ते ग्रीकभाषाया अवबोधने। तत्रापि पाठेषु स्वरा अंकिताः सन्ति। परं भ्रान्तिरेवेयम्। ग्रीकभाषायां स्वराङ्कनं तूत्तरकाले ख्रीष्टपूर्वे षष्ट्यधिकद्विशततमे वर्षे बाइजेण्टियमवास्तव्येन एरिस्टोफेनीजनाम्ना वैयाकरणेनाविष्कृतमभूत्। ग्रीकभाषाया हस्तलिखितग्रन्थेषु स्वराङ्कनं ख्रीष्टीयसप्तमशतकात्पूर्वं नाविद्यन्त। अतः सुव्यक्तमेतद् यत्स्वराङ्कनं विनैव पूर्वतरे काले ग्रीकलेखाः प्लेटोसहितैः सर्वैर्ग्रीकवासिभिः सम्यगवाबुध्यन्त। अद्यापि ग्रीकभाषा स्वराङ्कनं विनापि सुष्ठु बोधगम्यास्ति[३]।

एवमेवैतत्प्रतिभाति यद् वैदिकभाषायामपि स्वराणां प्रयोगः केनचिदज्ञातेनानभिज्ञातेन वैयाकरणेन याज्ञिकेन वा सावधानतया शुद्धरूपेण, धर्मग्रन्थानां रक्षणे साहाय्यं प्रदातुम्, तेषां ग्रन्थानां प्राचीनोच्चारणविधीनां परिरक्षणाय चापि प्रारब्धः स्यात्। एष प्रयोगो वैदिकाध्ययनस्य ह्रासकाले, विशेषतः पाणिनियुगात्पूर्वं क्षुब्धासु स्थितिषु, प्रातिशाख्यानां काले अथवा तेभ्यः किञ्चित्पूर्वं शाकल्यात्पश्चात् प्रारब्धः स्यात्; यतो यास्केन 'वायो न्यधायि' इति पदयोः शाकल्यस्य पदपाठो 'वा। यः। नि। अधायि' इति वर्तमानाङ्कितस्वरस्यालोके दूषितो घोषितो वर्तते[४]।

इदानीमुपसंह्रियते। प्रतीयते यदादौ वैदिकस्वराणां प्रयोगो वैदिकपाठानामुच्चारणे साहाय्यायाभिप्रेत आसीत्। तेषां स्वराणां मन्त्रादीनां भाष्येण सह कोऽपि सम्बन्धो नासीत्। गच्छति काले व्याकरणविषयकाध्ययनानां तेषां स्वराणां योगः केषाञ्चन वैदिकपदप्रयोगाणामवगमाय कृतः स्यात्। व्याकरणाध्ययनस्य च वैदिकमन्त्राणां शुद्धोच्चारणस्य च महत्त्वं प्रतिपादयितुमिन्द्रशत्रुप्रभृत्याख्यानान्याविष्कृतानि। तेषामाख्यानानामेतद् यथार्थस्वरूपमुत्तरे काले प्रालुप्यत, तानि

---

१. तस्य सूत्राणि पा० ६।१।१९५, १९६, २०१ प्रभृतीनि द्रष्टव्यानि।

२. शुक्लयजुर्वेदप्रातिशाख्ये, २।२५, २७, २८, ३१, ३४, ३५, ४५, ५३, ५४,५ ८ सूत्रेषु।

३. एफ. कि स्मिथश्च टी० डब्ल्यु० गैल्विशश्च, टीच योर सैल्फ ग्रीक इति ग्रन्थे भूमिकायां १८ तमे पृष्ठे।

४. निरुक्ते—६।२८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

चैतिहासिकानि तथ्यान्यमन्यन्त[1]। यथा जैमिनीयसामवेदसंहितायाम्, पैप्पलादाथर्ववेद-संहितायाम्, काठकसंहितायां च स्वराङ्कनहीनमन्त्रपाठैर्ज्ञायते पुरा काले वैदिकपाठाः स्वरैर्हीनाप्यवाबुध्यन्त। मन्त्रसंहिताभिः सह सर्वे वैदिकग्रन्था अद्यापि स्वरस्य साहाय्येन विनापि नियतमेवावगम्यन्ते। स्वराङ्कनं तु केषाञ्चन मन्त्रपाठानामर्थसमृद्धिं ह्रासं गमयति, संकोचयति वा, यो ह्रासो 'भद्रैषां लक्ष्मीर्निहिताधि वाचि[2]' इति मन्त्रं विरुध्यति।

---

१. एतत्तु व्यातव्यमस्ति यदिन्द्रशत्रुरिति पदं कस्मिन्नपि वेदमन्त्रे न प्रयुक्तः। तत्र किमप्येतादृशं याज्ञिकं विधानमपि नोपलभ्यते वैदिककृतिषु, यत्र, शब्दोऽयं प्रयुक्तः स्यात्। एतदनुभूयैव सिद्धान्तकौमुद्याः सुबोधिन्यां टीकायां पा० १।२।३४— 'यज्ञकर्मण्यजपन्यूङ्खसामसु' सूत्रस्य व्याख्यान उक्तमस्ति यदस्य सम्बन्ध ऊहादि-क्रियाभिः सहास्ति।

२. ऋग्वेदे—१०।७१।२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# ऋग्वेदसंहितानुसारेण जगदुत्पत्तावीश्वरस्य कारणत्वविचारः

डॉ० ओङ्कारनाथतिवारी
साहित्यविभागाध्यक्षः,
राजकीयसंस्कृतमहाविद्यालयस्य,
पटना—४

❀ ❀ ❀

ईश्वरो जगज्जनयतीति मान्यतायाः समर्थकानां मन्त्राणामृग्वेदे श्लाघ्यमस्तित्वं कस्येश्वरजिज्ञासोर्हृदयं नानन्दयेत् ?

ऋग्वेदस्य वालखिल्यसूक्ते वर्तमानस्यैकस्य मन्त्रस्योपरि निष्पक्षपातं चिन्तनं विचारकाः कुर्युश्चेदनेनैव ब्रह्मणो मायावच्छिन्नरूपस्येश्वरस्य जगत्कारणत्वं निष्पद्येत[1]। स मन्त्रः सुस्पष्टमिदं निर्दिशति यद् जगदिदं ब्रह्मण एव विभूतिरिति। अत्रैकं वा इदं बभूव सर्वमिति मन्त्रांशबलात् सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्युपनिषद्-वाक्यं स्मारयति किल। अनेन निर्विवादमेवायमर्थो निर्गच्छति यद् ब्रह्मण एव विभूति-रिदं जगदिति।

सूत्रात्मनानेन जगतो ब्रह्मविभूतित्वे साधितेऽस्यैवार्थस्य पुनः समर्थनायोदाह्रिय-माणा मन्त्रा अस्यैव भाष्यभूता ननु।

पुरुषसूक्तस्य टिप्पणीनिर्दिष्टः स मन्त्रो[2] यस्य भाष्यं जीवेभ्यस्तत्तत्कर्मफलोप-भोगदानाय पुरुषस्यैव जगद्रूपतापरिग्रहं व्याचष्टे, सूत्रात्मकस्यास्य भाष्यभूत एव।

अस्य मन्त्रस्यायं भाष्यांशोऽवश्यं हृदये धारणीयो येनेदं तथ्यं स्पष्टीकृतं यदन्नेन प्राणिभिरनुष्ठितानां कर्मणां यद्भोग्यं फलं तत्तेभ्योऽवश्यं प्रदेयमिति हेतुना स विराट् पुरुषः कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति। पुरुषस्य जगदवस्थास्वीकारौपाधिको जीवानां कर्मफलभोगहेतुकस्तस्माज्जगदिदं तस्य विभूति-विशेषो न तु वास्तवं तदीयं स्वरूपमिति।

---

१. एकैवोषाः सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम्।
एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः॥ (ऋग्वेदे—८।५८।२)

२. पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ (तत्रैव—१०।९०।२)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं विश्वकर्मण: परमेश्वरस्य कण्ठरवेण द्यावाभूम्योर्जनकत्वं प्रख्यापयतो विश्वकर्मसूक्तघटकस्य टिप्पणीविनिर्दिष्टस्य मन्त्रस्यापि तात्पर्य्यं निर्धारणीयम्[१]। 'विश्वतश्चक्षुरिति' मन्त्र: स्वपूर्ववर्त्तिमन्त्रविनिर्दिष्टानामाक्षेपाणां समाधानोपस्थापको मन्त्र: ।

पूर्ववर्ती मन्त्र: परमेश्वरस्य जगत्स्रष्टृत्वमधिष्ठानोपादानादिसृष्ट्यपेक्षितोपकरणसम्भारमन्तरेणानुपपन्नमित्याक्षेपं प्रतिपादयन्नुपनिबद्धो विद्यते । अग्रमिदमभिधत्ते यत्—लोके हि घटं चिकीर्षु: कुलालो गृहादिकं किञ्चित्स्थानमधिष्ठाय मृद्रूपेणारम्भद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति। तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायां किमधिष्ठानमासीदित्यादि । 'विश्वतश्चक्षुरुत' इत्यादिमन्त्रास्तु तत्समाधानमिदं कथयित्वा प्रयच्छति यद् भवेदेवं यदि कुलाल इव परमेश्वरोऽपि प्रादेशिको देशकालवस्तुपरिच्छिन्नो भवेत् ।

नन्वेवं स हि परमात्मा सर्वव्यापक: कुलालादिविलक्षणस्तस्मादधिष्ठानाद्यभावेऽपि जगत्सृष्टिस्तस्य कृते न दुष्करेति ।

ऋग्वेदीयदशममण्डलस्य हिरण्यगर्भसूक्तेऽपि हिरण्यगर्भस्य जगज्जनकत्वमवलोक्यते। हिरण्यगर्भोऽपि परमात्मन एव नाम। तदुक्तं 'हिरण्यगर्भ: समवर्त्ततेति' मन्त्रस्य भाष्ये सायणाचार्य्येण[२]। टिप्पणीविनिर्दिष्टादित: सायणभाष्यवाक्यात् स्पष्टमिदं यद्धिरण्यगर्भ: परमात्मनो न भिन्न इति ।

हिरण्यगर्भसूक्तस्य सूक्तकृदृषिरपि हिरण्यगर्भ एव। स भगवन्तं हिरण्यगर्भं सूक्तस्य नवमेन मन्त्रेण जगतो जनकं व्याहरन्निदं प्रार्थयते—"हे भगवन् ! भवान् अस्मान् रक्षतु। अस्माकमभ्युदयमार्गे बाधां नोपस्थापयतु[३]" ।

एतेनेश्वरो जगज्जनयतीति सिद्धेऽपि तदीयं जगज्जनकत्वं जनकत्वस्य कां विधामवलम्ब्य विश्राम्यतीति विवेक्तव्यमापद्यते ।

**ऋग्वेदे ईश्वरशब्दस्यास्तित्वविचार:**—केचित्तु ऋग्वेदे ईश्वरशब्दस्यास्तित्वमेव निषेधयन्ति । ईश्वरशब्दसमानार्था हिरण्यगर्भ-प्रजापति-विश्वकर्मपुरुषादय: शब्दा दृश्यन्ते; किन्तु साक्षादीश्वरशब्दो न दृश्यत इति तेषां तात्पर्य्यम्; किन्तु

---

१. विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावा भूमी जनयन् देव एक: ।। (ऋ० १०।८१।३)

२ यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते । (सायणभाष्यम्)

३ मा नो हिंसीज्जनिता य: पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ।। (ऋ० १०।१२१।९)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पञ्चममण्डलान्ते पठनीयं श्रीसूक्तं चेदाश्रीयते, तदा श्रीसूक्तेऽस्तीश्वरी[1]शब्दः। स च स्त्रीलिङ्गसमानलिङ्ग इतीयानेव भेदः। अन्यथा तु स ईश्वरशब्दोऽस्त्येवेति विद्वांसो विभावयन्तु।

## आरम्भवादः

जगत्कारणवादेऽस्मिन् बहवस्तत्त्वविचारका बहूनि मूलकारणानि मन्यन्ते। आस्तिकेष्वपि तत्त्वविचारकवर्गेषु नैयायिका वैशेषिकाश्च बहुमूलकारणवादिनः। ते हि पृथिव्यादिसृष्ट्यर्थं पृथिव्यादीनां परमाणून् कारणानि कथयन्ति। एकं नित्यमाकाशं विहाय चतुर्णां पृथिव्यादिभूतानां सृष्ट्ये सजातीया अनन्ताः परमाणवोऽङ्गीक्रियन्ते। अनन्ताः पार्थिवाः परमाणवः, अनन्ता जलीयाः परमाणवः, अनन्ता आग्नेयाः परमाणवः, एवमनन्ता वायव्याः परमाणव इति।

एते परमाणवः पृथिव्यादीनामुपादानकारणतां भजन्ते। पृथिव्यादिरूपस्य जगतो निमित्तकारणमीश्वरः परमात्मा वेति तेषां मान्यता। इमे परमाणवस्तस्य तस्य द्रव्यस्य सूक्ष्मतमं स्वरूपं प्रकाशयन्ति। स्थूलस्य द्रव्यस्य सूक्ष्मताया दिशि क्रियमाणस्य विभाजनस्य प्रवाहः परमाणूनेव प्राप्य विश्राम्यति। परमाणव एव पुनः सजातीयैः परमाणुभिः संयुज्यमानाः क्रमशः स्थूलतां प्रपद्यन्ते। एवमेषामेव यथाकालं यथाजगदीश्वरेच्छं घटमानाभ्यां संयोगवियोगाभ्यां जगदिदमुदयं लयञ्च प्रतिपद्यते।

इम एव परमाणवः सहकारिभिः सह संसारस्यारम्भकाः। परमाण्वादिषु स्वकालेषु पूर्वमवर्तमानस्य संसारस्य परमाण्वादय आरम्भं कुर्वन्ति। परमाण्वादयः संसारस्यारम्भकानि कारणानि सम्पद्यन्ते। अस्मिन्नारम्भवादीये कार्य्यकारणभावे कार्यकारणयोः परस्परं स्थवीयान् भेदः। अतः कारणमन्यत्, कार्यञ्चान्यत्। अन्यस्मात् कारणादन्यस्य कार्य्यस्योत्पत्तिरिह कारणवादे फलति।

कार्य्यकारणयोरयं भेदश्चार्थक्रियाकारित्वभेदमूलकः। न हि पटेन निष्पाद्यमानं कर्म तन्तुभिर्निष्पादयितुं शक्यम्। तस्मात्तन्तवो भिन्नाः, पटश्च भिन्न इति। अत आरम्भवादिनां नयेन उपादानकारणतामापद्यमानेषु पदार्थेषु कार्यस्य प्रागभाव एव, प्रागभावप्रतियोगित्वस्यैव कार्य्यत्वात्। अयञ्चारम्भवादः परमाणुकारणवादशब्देनापि प्रसिद्धः।

---

१ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ ( ऋग्वेदे खिलमन्त्रे श्रीसूक्तम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

"द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्" ( वै० सू० १।१।१० ) इति सूत्रानुसारं पार्थिवादिपरमाणुषु गुणानां सद्भावात्तत्कार्यात्मकेषु स्थूलात्मकेषु पृथिव्यादिष्वपि गुणान्वयनस्य सङ्गतिः सम्पद्यते । एवं समस्तः कार्यवर्गः परमाणुभिरारब्धो व्यवहारस्य साधनतां गच्छतीति तर्करसिकानां जगदुत्पत्तिप्रदर्शकः पन्थाः ।

जगदुत्पत्तावीश्वरे परमाणुवदारम्भकरूपं कारणत्वं भवितुं नार्हति । आरम्भकत्वरूपस्य कारणत्वस्य हि दृष्टान्तविधया तार्किकाः पटमुपस्थापयन्ति । ते कथयन्ति—"पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि तत्सादृश्येन यावत् किञ्चित् सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते" । स चावयवावयविविभागो यतो निवर्तते, सोऽपकर्षपर्य्यन्तगतः परमाणुः । सर्वं चेदं जगद् गिरिसमुद्रादिकं सावयवम् । सावयवत्वाच्चाद्यन्तवत् । न चाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति ।

सर्गकाले वायवोयेष्वणुषु अदृष्टापेक्षं कर्मोत्पद्यते । तत् कर्म स्वाश्रयमणुमण्वन्तरेण सम्भुनक्ति । ततो द्वयणुकादिक्रमेण वायुरुत्पद्यते । एवमग्निः । एवमापः । एवं पृथिवी । एवमेव शरीरं सेन्द्रियमिति । एवं सर्वमिदं जगदणुभ्यः सम्भवति । अणुगतेभ्यश्च रूपादिभ्यो द्वयणुकादिगतानि रूपादीनि सम्भवन्ति तन्तुपटन्यायेनेति तर्करसिकानां जगदुत्पत्तिप्रक्रिया ।

यथा बहुभिस्तन्तुभिः पट आरभ्यत इति पटोत्पत्तौ तन्तुषु विद्यमानमारम्भकरूपं कारणत्वं सिद्धयति, तथा चेद् बहुभिरीश्वरैर्जगदिदमुत्पाद्येत, तदारम्भकत्वरूपं कारणत्वं भगवत्यपि सम्भवेद् भवितुम् । न तु तथा सर्वत्र श्रुतिष्वसहायस्येश्वरस्य जगदुत्पादकत्वव्यवस्थापनात् । महामहिमशालिनस्तस्य परमेश्वरस्य सहायतन्त्रतायां पूर्णत्वमेव भज्येत । अत एव ऋग्वेदीयैर्महर्षिभिः स्तूयमानानां देवानां सर्वत्र नैरपेक्ष्यमेव लिलक्षयिषितत्वं प्रतिपद्यते । इदमेव बीजं यद् ऋग्वेदस्य पञ्चममण्डले चतुस्त्रिंशत्तमे सूक्ते संवरणो नाम सूक्तकृदृषिरित्थं स्वाराध्यदेवमिन्द्रं स्तौति पञ्चमेन मन्त्रेण ।

स कथयति—अस्माकमाराध्यो देवराज इन्द्रः कस्यापि महत्त्वपूर्णस्य बलवच्छत्रुहननादिरूपस्य कार्य्यस्य कृते कदाप्यारम्भं न वष्टि ।

आचार्यसायणेनारभमित्यस्य समानार्थकतयेहारम्भशब्द एव प्रयुक्तः । तेनारभारम्भशब्दयोः समानार्थकता प्रकाशिता भवति । तथा चात्रापि पञ्चभिर्दशभिरेवारम्भस्य निष्पाद्यमानता वर्णिता । इदमारम्भकत्वस्य संघातसाध्यत्वं स्पष्टयति । अत एवेश्वरो जगदुत्पत्तौ नेदृशं कारणत्वं वोढुमीष्टे, ईश्वरसंघातासम्भवात् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्रापि सूक्तकृदृषेरयमेवाभिप्रायो यदस्माकमिन्द्रः साहाय्यमनपेक्ष्यैव महत्, महत्तरं महत्तमं वा कार्य्यं कर्तुमीश्वरः। जगतः सृष्टिविधावपि सङ्कल्पमहिम्नैव भगवता जगदुत्पाद्यते। न तदर्थं किमपि निमित्तान्तरमपेक्षते। यथोक्तं हिरण्यगर्भसूक्ते—"द्यावाभूमी जनयन्देव एकः"। न हि कुलालवद् जगदीश्वरस्याधिष्ठानापेक्षा। नापि घटोत्पादने मृत्तिकावदुपादानापेक्षा। नापि पदार्थान्तरोत्पादने सामग्र्यन्तरवदुपकरणापेक्षा। सर्वामपेक्षामवधूय चित्रचरित्रचित्रितं सदेवनागासुरसिद्धमानवं जगदिदं स सर्वशक्तिः परमात्मोर्णनाभिरिव लीलयैवाविर्भावयति।

किञ्चायमारम्भवादो वैशेषिकानां परमाणुनिष्ठतया जगत्कारणत्वमङ्गीकुरुते, परमाणूंश्च नित्यानातिष्ठते। परमिदं सर्वमृग्वेदविरुद्धं, विशुद्धं काल्पनिकमेव। इदमेव कारणं यद् ऋग्वेदस्य प्रसिद्धतमे दार्शनिके नासदीयसूक्ते परमेष्ठिनामकेन महर्षिणा प्रलयकालावच्छेदेन परमाणूनामप्यस्तित्वं निराकृतम्। तेन हि सुस्पष्टमेवेदमभिहितं सूक्तस्य प्रथमे मन्त्रे यन्नासीद्रज इति। अत्र रजःशब्देन परमाणव एवोच्यन्ते। तेनेदं निर्गच्छति यज्जगत्सृष्टेः पूर्वं परमाणवो नासन्निति[1]।

एवं श्रुत्या कण्ठरवेण परमाणूनामस्तित्वे निराकृते तेषां नित्यत्वमपि गगनकुसुमायितम्। तस्मादारम्भवादः काल्पनिकः श्रुतिविरुद्धः। ईश्वरेण सहारम्भकत्वात्मकस्य कारणत्वस्यानुपपत्त्या ग्रस्तश्च। सावयवस्यौपादानस्यारम्भकत्वं न निरवयवस्य परमेश्वरस्येति तात्पर्य्यम्। सर्वे सावयवा मूर्त्ता अपकृष्टपरिमाणवन्तः परिच्छिन्नाश्च। न ह्यस्माकं गगनवद् व्यापको देशकालवस्तुरूपत्रिविधपरिच्छेदशून्यः परमेश्वरस्तथेति। नात्रारम्भकत्वरूपं कारणत्वं जगदुत्पत्तिं प्रति संगन्तुं संघटते।

यद्यपि नासदीयसूक्तस्याद्यमन्त्रघटकवाक्यांशभूतस्य रजःशब्दस्याचार्य्यसायणेन लोकवाचकत्वं प्रदर्शितम्, तथापि तस्य परमाणुवाचकत्वमपि नासम्भवि। अत एव परमणुजगदकारणत्वाधिकरणे "रूपादिमत्वाच्च विपर्य्ययो दर्शनात्" (ब्र० सू० २।२।३।१५) इति सूत्रस्य भाष्ये शङ्कराचार्य्येण रूपादिमत्त्वात्परमाणूनां नित्यत्वं निराकृतम्। अस्यैव सूत्रस्य शाङ्करभाष्यटीकायां रत्नप्रभायां चेदं कथयित्वा श्रीरामानन्दभगवत्पादेन परमाणूनां जगत्कारणत्वं श्रुतिविरुद्धं समुद्घोषितं यन्नासदीयसूक्ते महर्षिणा प्रलये परमाणूनां सद्भावो नाङ्गीकृतः। तेन हि नासीद्रज इति स्पष्टमेवोक्तम्।

---

१. नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्। (ऋ० १०।१२९।१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अग्रे च महर्षिणेदमुच्यते–"तस्माद्धान्यन्न परः किञ्चनास" इति। अयं नासदीय-सूक्तस्य द्वितीयो मन्त्रः[1]। यदि रजःशब्दस्य लोकवाचित्वमेव कश्चनाङ्गीकुर्य्यात्, तदापि द्वितीयेनोद्धरणेन स्पष्टमेव ब्रह्मव्यतिरिक्तस्य वस्त्वन्तरस्य सत्ताप्रतिषेधात्परमाणूनामपि प्रलयकाले विनाश एव सिद्धयतीति न ते जगत्कारणतां ग्रहीतुमर्हा इति।

वस्तुतस्तु "जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः, तस्य षष्ठितमो भागः परमाणुः स उच्यते"। इति यथातार्किकपरमाणुपरिभावं रजोविशेषस्यैव परमाणु-संज्ञाया विहितत्वेन रजःशब्दस्य परमाणुवाचकत्वमेव सङ्गतं प्रतिभाति।

रजःशब्देन लोकानां बोध आचार्यसायणेनेदमभिधाय व्यवस्थापितो यल्लोका रजांसीत्युच्यन्त इति निरुक्तम्, तन्निरुक्तप्रामाण्यादिह रजःशब्दो लोकबोधक इति। शब्दानां कामधेनुत्वरूपोऽप्यर्थोऽस्तु परमाणुवाचकत्वमप्यस्तु। एवं परमाणुनिष्ठं जगत्कारणत्वमसङ्गतम्, तन्मूलकारम्भवादोऽप्यसङ्गत एव मन्तव्यः। शाङ्करभाष्यटीकायां रत्नप्रभायां रजःशब्देन परमाणुरूपार्थस्य ग्रहणं स्पष्टमेव कृतमिति[2]। अनेन प्रकारेण आरम्भवादो नास्ति ऋग्वेदे।

## परिणामवादः

आरम्भकत्वरूपं कारणत्वं नैकनिष्ठम्; किन्तु समुदायनिष्ठं तथानेकवस्तुनिष्ठमिति तदारम्भकत्वात्मकं नेश्वरे घटते कारणत्वम्। सर्वत्र श्रुतिषु सङ्कल्पैकसहायस्यैवेश्वरस्य जगदुत्पादकत्वप्रदर्शनात्। सजातीयविजातीयस्वगतभेदशून्यत्वेनैव 'सदेव सौम्येदमेक एवाग्र आसीत्'इत्यादौ, 'एकं वा इदं विबभूव सर्वम्' इत्यादौ चेश्वरस्वरूपोपवर्णनात्। आरम्भकत्वरूपकारणत्वस्य मूर्त्तवृत्तितया विभावीश्वरे तदसम्भवाच्च।

एवं जगदुत्पत्तौ नेश्वर आरम्भकं कारणमिति दृष्टम्। इदानीं तदुत्पत्तिं प्रति तस्य परिणामित्वरूपं कारणत्वं सम्भवति वा न वेति? प्रश्नो विचारार्थ-मुपादीयते।

तत्र परिणामित्वं नाम परिणामशालित्वम्। परिणामशब्दश्चायं दार्शनिकः शब्दः। सामान्यसाहित्यगतोऽयं यद्यप्यन्तकालस्य वाचकः। यथा किरातार्जुनीये परिणामसुखे गरीयसीत्यादौ भीमोक्तौ। यथा वा गीतायां 'विषयेन्द्रियसंयोगाद् यत्तदग्रेऽ-मृतोपमम्। परिणामे विषमिव'इत्यादौ। तथापि दर्शनजगति पारिभाषिकस्यास्याभिधेय-निश्चयस्तदीयपरिभाषाज्ञानाधीन एव। परिभाषाया अध्ययनेन च परिणामो नामैकादृशं कार्यमित्यर्थः पर्यवस्यति। तादृशं कार्य्यं विद्यते यस्य कारणस्य तत्कारणं परिणामीति व्यवह्रियते।

---

१. न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किञ्चनास ॥ (ऋ० १०।१२९।२)

२. किञ्च प्रलये नासीद्रजो नान्यत्किञ्चन मिषत्, इति अणूनां नाशसिद्धिः। तस्मान्न तेषां परमकारणत्वमिति। ( शा० भा० टी०, र० प्र०, ब्र० सू० २।२।३।१५ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं सति जगद्रूपं कार्यं यदि परमात्मनः परिणामनामकं कार्य्यं सिद्ध्येत्तदा परमेश्वरोऽपि तस्य परिणामिकारणं भवेत् । फलतः परिणामपरिभाषानुगुणं स्वोपादानसमसत्ताकं कार्य्यं परिणामशब्देनोच्यते। तत्तत्कार्य्यं तत्तत्कारणस्य परिणामरूपं कार्य्यम्, यत्तत्स्वोपादानसत्तासमानसत्ताकं भवेत् । परमेश्वरस्यैतादृशपरिणामरूपकार्यात्मकजगत्कारणत्वे जगतः परमेश्वरसत्तासमानसत्ताकत्वमापतेत् । तथा चोत्पादविनाशशालिनो जगतः पारमार्थिकत्वे मोक्षादिव्यवस्थाव्याकोपः स्यात्। तस्मादीश्वरे जगदुत्पत्तिं प्रति परिणामिकारणमपि भवितुं नार्हति ।

किञ्च, परिणामो नाम मूर्तपदार्थवृत्तिधर्मः। ईश्वरस्य च दैशिककालिकवास्तविकेति त्रिविधपरिच्छेदशून्यत्वेन विभुत्वादीश्वरवृत्तित्वस्य तत्रासम्भवाच्च ।

यथा दध्नः क्षीरं परिणामिकारणम्। क्षीरस्य परिणामात्मकं कार्यं दधीति। स्वोपादानक्षीरसत्तासमानसत्ताकं दधीति लक्षणसमन्वयः । उपादानभूतस्य क्षीरस्य या व्यावहारिकी सत्ता तत्समाना सत्तापि व्यावहारिक्येव, सा व्यावहारिकी सत्ता दध्नोऽपि भवत्येव। जगतः सृष्टिकालादारभ्य प्रलयपर्य्यन्तमवतिष्ठमानो यः कालः स व्यवहारकालः। तत्र कालेऽवतिष्ठमाना या सत्ता सैव व्यावहारिकी सत्तेति निगद्यते। इयञ्च सत्ता क्षीरस्यापि दध्नश्चापि भवत्येव । तस्मादुभयोः समानसत्ताकत्वमव्याहतम् ।

वेदान्तदर्शनस्य विशिष्टाद्वैतवादिसम्प्रदायाय परिणामवाद एव स्वदते । स यावद्विधविशेषशून्ये ब्रह्मणि न श्रद्दधाति; किन्तु चिदचिच्छब्दबोध्याभ्यां जीवात्मप्रकृतिभ्यां विनष्टस्य ब्रह्मणः सद्भावमङ्गीकुरुते । बृहति बृंहयतीति यत्तद् ब्रह्मेति ब्रह्मशब्दं व्युत्पादयन्ति । एतदनुसारं ब्रह्म स्वयं बृहद् भवितुं स्वेतरञ्च बृहत्कर्तुं समर्थं नाम। बृहद्भवनं बृहत्करणञ्च ब्रह्मणः स्वभावः ।

इदमेव चिदचिद्विविशिष्टं ब्रह्म जगतः परिणाम्युपादानमिति तदीया मान्यता। ब्रह्मणो जगदुपादानत्वेऽपि निर्विकारत्वं तदीयं न हीयते। सर्वत्रोपादानकारणं विकारभावमापद्यते। यथा घटस्य मृत्पिण्ड एव स्वरूपेण परिणममानो घटाकारं याति । एवं विकारभूयमनुभवतो घटस्य यथा नित्यत्वं सिद्धयति, तथा ब्रह्मणोऽपि परिणामितया नित्यत्वं दुर्निवारं स्यात्।

तथात्र देवमनुष्यतिर्य्यक्स्थावरं विविधविचित्ररचनात्मकं नानानामरूपविभागार्हं स्थूलं चेतनाचेतनसमूहरूपं यद् जगत्तद्विशिष्टं ब्रह्मप्रति नामरूपविभागानर्हं सूक्ष्मं चिदचिद्विशिष्टं ब्रह्म यद्युपादानकारणं मन्येत, तदा परं ब्रह्म नारायणोऽपि परिणामी भवेत्। परिणामितया च परब्रह्मणो नारायणस्यापि घटवदनित्यत्वमापद्येत । एवं ब्रह्मणो जगदुपादानत्वमनिष्टापादकमिति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवेदेवं यदि परिणामः स्वरूपमपि प्रभावितं कुर्य्यात् । देवानां मनुष्याणां तिरश्चांश्च चेतनानामध्ययनतः परमयं निष्कर्षो निष्पद्यते यत् परिणामः प्रकृतिनिर्मितं शरीरम्, तच्छरीरविशिष्टस्य जीवनात्मनो धर्मभूतं ज्ञानमेव च प्रभावयन्नवलोक्यते, न तु जीवस्य स्वरूपम् ।

तत्र बाल्यं यौवनं जरा च प्रकृतिनिर्मितशरीराश्रितः परिणामः । जीवात्मनो धर्मभूतस्य ज्ञानस्य परिणामश्च "मम ज्ञानमुद्गतम्, मम ज्ञानमस्तंगतम्, अहं सुखी, अहं दुःखीत्यादिरूपेणानुभव एव । एवं शरीरे जीवात्मनां धर्मभूते ज्ञाने च रूपान्तरं जायमानमपि तेषां स्वरूपे किमपि रूपान्तरं न पदं लभते । इदमेव कारणं येन जीवस्वरूपं नित्यं व्यपदिश्यते । फलतः परिणामोऽयं प्रकृतिनिर्मिते शरीरे जायते । ब्रह्मविशेषणीभूतेयं प्रकृतिरचिच्छब्देनोच्यते । तेन ब्रह्मणोऽचिदंशे परिणामः । सा चेयं प्रकृतिः स्वरूपतः परिणामिन्येवानित्या च । नित्या त्वियं प्रवाहरूपेण जायते । अस्या अनित्यत्वं न दोषः । चिदंशस्य धर्मभूते ज्ञान एव परिणामो न स्वरूपे ।

चिच्छरीरके सर्वाधारे परमात्मनि तु लेशतोऽपि परिणामस्य न सम्भावना, तस्य कर्मसम्बन्धाभावात् । केवलमयं चिदचितोरुभयोरेवावच्छेदेन परिणामः सम्भवी । एवं परिणामवादे ब्रह्मणोऽनित्यत्वं न कथमपि सम्भवति । तस्मात् परिणामवादोऽयं विशिष्टाद्वैतवादिसम्प्रदाये ससम्मानं सप्रमाणं च समाश्रीयते ।

तत्सम्प्रदायशिरोमणिभूतानामाचार्य्याणाञ्चेयं मान्यता यदृग्वेदोऽस्माकं सिद्धान्तस्य प्रमुखं प्रथमञ्चोद्गमस्थानम् । ऋग्वेदो मन्त्रभाषयास्माकं सिद्धान्तं प्रमाणयन्नवलोक्यते । स इदं कथयति यदेकत्र वृक्षे द्वौ पक्षिणौ सस्नेहं निवसतः । अनयोरन्यतरो वृक्षफलं भुङ्क्ते, नोभौ । एकतरस्तु फलोपभोगं विहायैव निवसति ।

ऋग्वेदस्य प्रथममण्डलीये चतुःषष्ट्युत्तरशततमे प्रसिद्धेऽस्य वामीये सूक्ते विंशतिसंख्याकोऽयं मन्त्र[1] इति; किन्तु मन्त्रभाषेयमीदृशी मायाविनी या विशिष्टाद्वैतवादसिद्धान्तमेव सिद्धान्तान्तरव्यवच्छेदेन न प्रकाशयति, प्रत्युत सायणभाष्यमादर्शीकृत्य विचार्य्येति चेदद्वैतसिद्धान्तमपि प्रकाशयितुं तथैव तत्परा यथा सिद्धान्तान्तरम् ।

चिदचिद्विशिष्टस्य परमात्मनः प्रमाणभूतोऽयं मन्त्रो वृक्षात्मनाचिदंशं जीवात्मना भोक्तारं चिदंशं तथा द्रष्टृत्वात्मना नियामकं परमात्मानं प्रकाशयति । इदमेवास्य साम्यं विशिष्टाद्वैतवादसिद्धान्तेन । तत्रापि प्रकृतिजीवाभ्यां सह परमात्मनोऽवस्थानं नान्तरीयकम् । मन्त्रेऽपि स एव पन्थाः समाश्रित इति विशिष्टाद्वैतवादोऽयं

---

१. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥
( ऋ० १।१६४।२० )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

प्रमाणितो जायते। ऋग्वेदस्य नात्र विसंवादः। एवं परिणामवादोऽपि नावज्ञेयः। विशिष्टाद्वैतवादसिद्धान्तस्य हृदयनिर्विशेषोऽयं वाद इति। तथा सति जगन्मिथ्यात्वं न सिद्ध्येत्। कारणसमानशीलत्वात्कार्य्यस्य प्रपञ्चोऽयं परमार्थः सम्पद्येत।

ऋग्वेदस्य सूक्तकृतां महर्षीणां सूक्तात्मिकां तत्तद्देवमुद्दिश्य विधीयमानां तपश्चर्य्याञ्चावलोक्य निष्पक्षपातं कश्चिदेवं शक्नोत्येव वक्तुं विपश्चिद् यदेषामपि मनो विभूतिस्तोमे यथानुरक्तं न तथान्यत्र।

हिरण्यगर्भसूक्ते महर्षिः परमात्मन ऐश्वर्य्याधिपत्यमेवार्थयते। हिरण्यगर्भसूक्तस्यान्तिमो मन्त्रोऽयम्[1]। प्रजापतिपुत्रो हिरण्यगर्भं कथयति—प्रजापते, ऋते भवन्तं कोऽप्यस्मानात्मीयतया नैव गणयति। तस्मादेवं दयावता भवितव्यं भवता येन वयं सांसारिके जीवने जीवनोचितां सुन्दरीं स्थितिमासाद्यापराधीनं जीवनं लब्धुमीश्वरा भवेमेति।

अत्र वर्तमानं जीवनं महर्षेर्महीयसः प्रेम्ण आस्पदतां प्रपद्यते। न हीहैव केवलं प्रत्युत कानिचित्स्थलानि विहाय सर्वत्र सूक्तप्रणेतारो महर्षयः स्वेष्टदेवं सांसारिकमेव जीवनं सम्पन्नमकण्टकं समृद्धञ्च विधातुमनुकूलयन्तो दृश्यन्ते। इयमेषां वाङ्मय्यपि प्रवृत्तिः प्रपञ्चस्य परमार्थतामेव दर्शयति। स्वरूपतोऽनित्यत्वेऽपि प्रवाहात्मना प्रकृतेर्नित्यत्वं त्वविरुद्धमेव। एवं सर्वेषामृग्वेदसूक्तप्रणेतृमहर्षीणां प्रपञ्चोपभोगे परमादरो विशिष्टाद्वैतसिद्धान्तं गरयन्नेव सम्पद्यते।

आचार्य्यसायणः परमत्र न सहमतः। स तु सर्वत्राध्यात्मिकार्थसम्भावनास्पदे मन्त्रे तथा भाष्यस्य प्रवाहं घटयति, यथा स सिद्धान्तान्तरं विलोप्य केवलमद्वैतसिद्धान्तमेव ऋग्वेदसर्वस्वमिति सिद्धान्तयति।

अस्य वामीयसूक्तस्य नासदीयसूक्तस्य वा दार्शनिकसूक्ततया विश्रुतस्य यः कश्चन मन्त्र उपादीयताम्। दृश्यताञ्चाचार्य्यसायणः कीदृशेन मन्त्रेण कौशलेनाद्वैतवादस्य पक्षं मतान्तरं प्रतिक्षिपन् क्षयति[2]।

अस्याध्यात्मिके व्याख्याने शाङ्करसिद्धान्तस्यैवाचार्य्यसायणेन समर्थनं कृतम्। स परमेश्वरस्य साक्षात्कारमेव जीवनोद्देश्यं निश्चिनुते। अस्य मन्त्रस्य भाष्यं विदधानः ससंक्षेपमेतदीयमाशयमेवं प्रकाशयति।

स्वाधीनमायो जगत्कारणभूतः परमेश्वर एकः। तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट् सूत्रात्मानौ। तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्ध श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः।

---

१. प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव।
यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥ ( ऋ० १०।१२१।१० )

२. अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः।
तृतीयो भ्राता घृतपृष्ठो अस्या त्रापश्यं विस्पतिं सप्तपुत्रम्॥ ( तत्रैव–१।१६४।१ )



CC-0. Sampurnanand University Collection. Digitized by eGangotri

भाष्यादितो ज्ञानगायकस्याचार्य्यशङ्करस्याद्वैतवादो यथा स्पष्टतामेति, न तथा भक्तिभावस्याचार्य्यरामानुजस्य विशिष्टाद्वैतवादः । एवमन्यत्र सर्वत्राध्यात्मिकव्याख्यायामाचार्य्यसायणस्याचार्य्यशङ्करस्याद्वैतवाद एव श्रद्धातिशयो दृश्यते ।

आचार्य्यसायणस्य च व्याख्यानं नैवंविधं व्याख्यानं यद् विदुषां हृदयं नावर्जयेत् । प्रत्युतैतदीयमेव भाष्यात्मकं मन्त्रव्याख्यानं परं श्रद्धेयतामेति ।

अस्यां स्थितौ विशिष्टाद्वैतवाद एवास्थेय इति नाद्वैतवादे ऋग्वेदाशयप्रकाशनाय प्रकल्पत इति कथनं दुस्साहसमेव । तथापि विशिष्टाद्वैतवादे परिणामवाद आश्रीयत इति कृत्वा तदीयेन दृष्टिकोणेन परिणामवादचर्चासौ समवलोकिता, न तु परिणामवादस्यैवाश्रयणीयत्वं प्रकाशयितुमयं प्रक्रम इति ।

## विवर्त्तवादः

कार्य्यभावात्मना कारणभावात्मना च विश्वस्य विभाजनं सम्पाद्य सम्पाद्यमानाय विवेचनाय समेऽपि दार्शनिका स्पृहालव एव । समीचीनं चेदं कार्य्यकारणभावगर्भं पदार्थानां चिन्तनं किल ।

तत्रारम्भवादस्योपासकानां प्रतिपत्तिप्रावीण्यं निरीक्षितम् । परिणामवादिनाञ्च प्रतिभानं कस्मै न रोचते चेत्, ब्रह्मणः सावयवत्वे सर्वेऽपि महर्षयः श्रद्दध्युः । यद्वा ऋग्वेदस्य "अस्थन्वन्तं यदनस्था बिभर्त्तीति[1]", मन्त्रांशप्रमाणकेन तदीयेन नैर्गुण्येन ये प्रभावितास्ते कथङ्कारं जगत् तदीयं परिणाममामनेयुः, इदमेव बीजं येन कार्य्यकारणभावक्षेत्रेऽस्मिन्नेकस्य तथाविधभावसंस्पर्शिनो वादान्तरस्य नवावतारः । अयञ्च 'विवर्तवाद' इति नाम्ना प्रसिद्धि लब्धवान् ।

अयमद्वैतवेदान्तदर्शनानुमोदितः कार्यस्वरूपप्रकाशको वादः । अत्राद्वैतदर्शने द्वावेव पदार्थौ—दृक्, दृश्यञ्च । दृक् पदार्थ आत्मा पारमार्थिक एक एव । अविद्या तद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः । अयमपारमार्थिकः । अपारमार्थिकेऽपि दृश्यवर्गे पदार्थास्त्रिविधाः—व्यावहारिकाः, प्रातिभासिकाः, बौद्धाश्च । उपासनादौ व्यावहारिकपदार्थानामुपयोग इति प्रातिभासिकवैलक्षण्यम् । प्रातिभासिकास्तु यावत्प्रतिभासमवतिष्ठन्ते, बौद्धास्तु सर्वथा वस्तुशून्याः शशशृङ्गादय इत्यनयोर्भेदः ।

अत्र पारमार्थिकपदार्थसत्तासमानसत्ताको नैकोऽपि पदार्थ इति दर्शनस्याद्वैतनामकरणमन्वर्थकम् । इदमेव ब्रह्म बुद्धिबोध्यम् । इदञ्च यदा मायया स्वशक्त्या विच्छिन्नं भवति, तदेश्वर इत्युच्यते। तदेव च जगतः सृष्ट्यादि कर्तुमीष्टे । अयमेवेश्वरोपासकानां सर्वस्वं मनसा ध्यातव्यतां प्रपद्यते ।

१. को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।
भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुपगात्प्रष्टुमेतत् ॥ ( ऋ० १।१६४।४ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स चायमीश्वरः प्राणिनां कर्मसु तेभ्यः फलोपभोगं प्रदातुमुद्यतमानेषु जगतः सिसृक्षां कुरुते—इदमिदानीं मया स्रष्टव्यमिति। भगवत इयमिच्छैव मायाशब्दव्यपदेश्या। एतदिच्छोपादित्सु चैव भगवतो मायावच्छिन्नत्वम्। भगवतः सेयमिच्छैव मायाभिधाना जगदाकारेण परिणमते। भगवत्सम्बन्धमन्तरेण जडेयं माया किञ्चित्करी। तस्माज्जगतः सृष्टौ मायाया उपादानत्वं भगवतश्च निमित्तकारणत्वमिति।

इदञ्च जगद्रूपं कार्य्यं मायोपादानकं भगवत्सहकृतम्। तन्मायायाः परिणामात्मकं कार्यम्, भगवतश्च विवर्त्तात्मकं कार्य्यमिति व्यवस्था।

मायायाः परिणामात्मकं कार्य्यं जगत्, मायासत्तासमानसत्ताकमिति भावः। यथा मायायाः सत्ता अनिर्वचनीया तथा तस्याः परिणामात्मककार्य्यस्य जगतोऽपि सत्तानिर्वचनीयैवेति। वेदान्तदर्शने सर्वस्य कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वमिति नियमेन स्वोपादानमूलाविद्याधिष्ठानभूते ब्रह्मणि समाश्रितञ्चेदं कार्य्यं विवर्तात्मकमवगन्तव्यम्, ब्रह्मसत्तातो जगत्सत्ताया विषमत्वात्। ब्रह्मसत्ता हि पारमार्थिकी। जगतश्च व्यावहारिकीति लक्षणसमन्वयः।

अस्य परिणामवादसमनियतस्य विवर्तवादस्याद्वैतवेदान्तदर्शने सर्वत्र मूलाविद्योपादानके तूलाविद्योपादानके च भ्रमस्थलेऽवस्थानम्। व्यावहारिकः संसारो मूलाविद्यायाः परिणामः। मूलाविद्यादेशसमानदेशतया च ब्रह्मचैतन्यस्य विवर्त इति। एवं सर्वत्राद्वैते सर्वं कार्य्यं परिणामात्मकं विवर्तात्मकञ्च विवर्तवाद, इति व्यपदेशस्तु ब्रह्मणः प्राधान्येन व्यपदेशा भवन्तीति न्यायात्।

एवमृग्वेदीयतात्पर्य्यगोचरीभूतो यथासायणभाष्यमद्वैतवादिनां वेदान्तदर्शनसमर्थितोऽद्वैतवाद एव प्रतीयते किल। अत एव नासदीयसूक्तस्यादिमो मन्त्रो 'माया कारणकं जगदिति' शाङ्कराद्वैतसिद्धान्तप्रदर्शनपरतया सायणेन व्याख्यातः। मन्त्रस्य भाष्यं बहुविस्तृतम्। टिप्पण्यां पूर्णो मन्त्रो निर्दिश्यते[1]। मूलमन्त्रस्वरूपं ज्ञात्वैव ज्ञायमानं भाष्यं श्रद्धोत्पादकं भवति। अस्य मन्त्रस्य 'नासदासीन्नो सदासीत्तदानीमिति' खण्डस्तत्काले वर्तमानस्य जगत्कारणस्य स्वरूपं व्याख्याति। अयं प्रतिपादयति यत्प्रलयवेलायां वर्तमानस्य जगत्कारणस्य स्वरूपं न सदात्मकमासीन्नो वाऽसदात्मकमासीत्; किन्तूभयात्मकत्वस्यान्योऽन्यविरुद्धत्वात्तस्य जगत्कारणस्य स्वरूपमनिर्वचनीयमासीत्। फलतो जगत्कारणं मायासीदिति तात्पर्य्यम्। तथा च जगत्कारणविधया मायायाः स्वीकृतावद्वैतवादो वा मायावादो वेति सिद्धान्तस्वरूपमृग्वेदसमर्थितं सम्पद्यते।

एवमृग्वेदस्यान्यत्रापि तस्य तस्य मन्त्रस्याध्यात्मिकव्याख्यानावसरे सायणाचार्य्योऽद्वैतवादमेव समर्थयते।

---

१. नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥ (ऋग्वेदे–१०।१२९।१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उदाहरणस्य कृतेऽस्य वामीयसूक्तस्यैकविंशो मन्त्र उपादीयताम्[१]। टिप्पण्यां प्रदर्शितोऽस्य समग्राकारोऽस्याध्यात्मिकं पक्षं भाष्यगिरा प्रकाशयितुमुपादत्ते भाष्यकारः।

स व्याचष्टे—यत्र = यस्मिन्नात्मनि सुपर्णा—शोभनायतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीनि अमृतस्य भागम्। अत्र विषयावच्छिन्नचैतन्यममृतमित्युच्यते। तस्य भागं भजनीयं स्वस्वांशनिमेषरहितमनिमेषमनारतं विदथा = वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धानि अभिस्वरन्ति = अभिप्रयन्ति = आवरणोपगमनेन स्फोरयन्ति। आचार्य्यसायणस्ततः परं व्याचष्टे। किञ्च, यस्तु इनः स्वामी अस्य देहस्य ( विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता ) यद्वा, विश्वस्य भुवनस्य भूतजातस्य स्वामी ( अस्य देहस्य गोपाः ) भाष्येणैवं व्याख्याय तत्त्वं पदार्थयोरेकत्वं प्रतिपाद्यते।

स परमेश्वरो धीरः समाधिनिष्ठः सर्वदा अविक्रियो मा मां पाकं परिपक्वमनस्कं यागदानादिना अवगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्वोद्रिक्तमनस्कं मामाविवेश। उक्तरूपे चित्ते तादृशवस्तु स्फुरतीत्यर्थः। यद्वा, अपरिपक्वमनाः। अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीति अविद्वान् ततः परमस्ति कश्चित्—सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद् गुरुशास्त्राभ्यां स एवाहमस्मीति मत्वा एवं पारम्पर्य्येण अवगत्य असम्भावनाविपरीतभावने भावनया साक्षात्कृत्य परिपूर्णः परमात्माऽभवमित्यर्थः। अयमेव 'स मा धीरः पाकमत्राविवेश' इत्यनेनोच्यते।

ननु अनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात् प्राप्तिरेव नोपपद्यते। सत्यम्, अत्र प्राप्तिर्द्विधा प्राप्तप्राप्तिः, अप्राप्तप्राप्तिश्चेति। प्राप्तस्यापि कण्ठे चामीकरन्यायेनावरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते। अस्य मन्त्रस्येदं भाष्यं निर्विवादमद्वैतवादं प्रतिपादयति। एवमन्येऽपि मन्त्राः सायणेन व्याख्यातमद्वैतवादं प्रख्यापयन्ति।

इदं प्रमाणीकृत्याद्वैतवादो चेदृग्वेदप्रतिपाद्यो निश्चितो जायते, तदा विवर्तवादमन्तरेणेश्वरनिष्ठस्य कारणत्वस्य कोऽप्यन्यः प्रकारः प्रवर्त्तितुं न क्रमेत। एवं जगन्निरूपितमीश्वरनिष्ठं कारणत्वं मायांशेन परिणामित्वात्मकं चैतन्यांशतश्च विवर्तात्मकं विवर्त्तित्वरूपमिति सिद्ध्यति। शब्दान्तरेणेश्वरस्य जगदिदं मायांशतः परिणामात्मकं चैतन्यांशतश्च विवर्तात्मकं कार्य्यमिति विवेकः। अस्यामेव स्थितौ 'एकं वा इदं विबभूव सर्वमिति' ऋग्वेदसिद्धान्तसूत्रं सर्वथा सङ्गतिं लब्धुमुत्सहते।

---

१. यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्राविवेश॥ (ऋग्वेदे-१।१६४।२१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं पुरुषसूक्तस्य स मन्त्रो यः पूर्वमुदाहृतोऽपि विद्यते, तस्य तात्पर्य्यं विचार्य्यमाणं विवर्त्तवादमेव निश्चाययति। तस्य मन्त्रस्य स्वरूपं यदस्ति "पुरुष एवेदं सर्वमिति", इदं समीक्ष्यमाणं सदेवं स कथयतीव प्रतिभासते यदिदं सर्वं तत्त्वं जगदवगच्छसि, तद् यथार्थं नावैषि; किन्तु तथा वेषि यथा कश्चिच्छुक्तौ रजतमवैति। वस्तुतस्तु तत्र रजतं नावतिष्ठते; किन्तु दृष्टिदोषतः स तत्र रजतं पश्यति। इत्थं यथा तस्य शुक्तौ रजतदर्शनं दोषमूलकम्, तथा तवापि पुरुषपदवाच्ये ब्रह्मणि जगद्दर्शनं दोषमूलकमेव।

अयमेवार्थो मन्त्रांशेनानेन प्रतिपाद्यते। इदं सर्वं पुरुष एवेति। अस्य पुरुषात्मना ज्ञानं प्रमा। जगदात्मना ज्ञानं तु भ्रम एवेति तात्पर्य्यम्। पुरुषे जगत्प्रतिभासो यद्यपि भ्रमस्तथापि सार्वजनिकतया भ्रमान्तरविलक्षणो न केवलं प्रतीतिकमेवास्तित्वम्; किन्तु व्यवहारनिर्वाहसक्षमं व्यावहारिकमप्यस्तित्वं धत्ते। इदमेव कारणं यदयं भ्रमो यावद् व्यवहारमनुवर्त्तमानो ब्रह्मसाक्षात्कारे सम्पन्न एव बाधितो भवति। भ्रमात्मकमिदमस्माकं जगज्ज्ञानमिति तथ्यञ्च शास्त्राचार्य्यैकशिक्षासमधिगम्यम्। तत्रापि श्रद्धाविश्वासशून्यस्य कृते दुर्लभमेव। वेदेऽस्माकं श्रद्धा भवेद् यदि यदयं वेदः कथयति यत्—'पुरुष एवेदं सर्वमिति', तदैवात्मानुसन्धानहेतवे मम प्रयास इदं विचार्य्य प्रचलेद् यद् वेदस्य कथनं कथमसत्यं भवेत्? अवश्यमेवास्माकं जगन्निरीक्षणप्रक्रिया दोषावहा। नूनमस्माकं दृष्टौ कोऽपि बलीयान् दोषः, येन ब्रह्मणः स्थाने मम बुद्धौ जगतः प्रतिभानमिति।

एवं स्वदोषविषयके सामान्यबोधे सत्येव मोक्षशास्त्राध्ययनस्य दिशि तदुपदेशकब्रह्मनिष्ठाचार्य्यान्वेषणस्य दिशि च मुमुक्षुर्भूत्वा कश्चिन्मानवः प्रवर्त्तते। तस्यैव कृते जगत्प्रतिभासो भ्रमः। अन्यस्य सर्वस्य कृते त्वयं बोधो व्यावहारिकः। लोकव्यवहारोपयोगित्वे नायमपरपण्डितनिर्बव्य इति न शुक्तिरजतवद्व्यवहारदशायामेव हेय इति।

परमार्थतस्तु वैदिकप्रामाण्यमभ्युपेयुषां भारतीयानामास्तिकानां विदुषां कृते त्वन्ततोगत्वा बोधोऽयं भ्रम एवेति पूर्वोदाहृतमन्त्रप्रामाण्येन विवर्तवादस्यैव यथासायण भाष्यमृग्वेदीयतात्पर्य्यपात्रत्वं पर्य्यवस्यतीति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# युष्मदादिभ्य आचारक्विप्

श्रीके० विष्णुनम्बूदिरी
आचार्यः,
राष्ट्रियसंस्कृतविद्यापीठे,
तिरुपतिः

❀❀❀

युष्मदादिहलन्तेभ्य आबन्तेभ्यश्च आचारक्विपोऽनभिधानमेवेति नागेशस्याभिसन्धिरस्मिन् निबन्धे विचार्यते ।

आम्शब्दा बहवः सन्ति, यथा—"कास्प्रत्ययादाममन्त्रे लिटि" (३।१।३५) "....ङसोसां .." (४।१।२), "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" (५।४।११), "ङेराम्नद्याम्नीभ्यः" (७।३।११६) इति । तत्र "ह्रस्वनद्यापो नुट्" (७।१।५४) इति नुटो निमित्तभूत आम् क इति विचार्य षष्ठीबहुवचनस्येति भाष्ये उक्तम् ।

तत्र लिट्यामो ग्रहणं कुतो नेत्याशङ्क्य तस्य अग्रहणार्थं लिट्यामि अकारानुबन्ध आशङ्क्तव्य इत्युक्तम् । तथा सति "अननुबन्धकग्रहणे न सानुबन्धकस्य" (प० ८१) इति न्यायस्य प्रवृत्तेः ।

लिट्यामि अकारानुबन्धकरणेन मकारस्य इत्संज्ञापत्तिवारणमपि सम्भवति । तत्रायं विचारः—मित्वकरणस्य मिदचोऽन्त्यात्परत्वं प्रयोजनं वाच्यम् । अजन्तप्रत्ययान्तधातुभ्योः मिदचोऽन्त्यात्परत्वेन वा प्रत्ययपरत्वेन वा तस्मिन् क्रियमाणे फले भेदाभावात्, आस्कासोराम्वचनरूपज्ञापकाश्रयणेन इजादिगुरुमत्सु ईह्यादिधातुषु तु मित्वे अमित्वे वा प्रत्ययपरत्वेनैव आमः क्रियमाणत्वाच्च मित्करणस्य न किमपि प्रयोजनं सिद्धम् । अत इत्कार्याभावात् लिट्यामो मकारस्य इत्संज्ञाऽपि नास्ति । ततश्च तदापत्तिवारणाय अकारानुबन्धोऽनावश्यक इति ।

एतस्मिन् विचारे इदं वाक्यं दृश्यते—"प्रत्ययान्तादाम् विधीयते, तत्र नास्ति विशेषो मिदचोऽन्त्यात्परत्वे वा प्रत्ययपरत्वे वा" (म० भा० ७।१।५४) इति । तत्र कैय्यटः—"प्रत्ययान्तादिति, ते चाजन्ताः, ननु हलन्तेभ्य आचारक्विबन्तेभ्य आमस्त्येव, नैतदस्ति, एकीयमतमेतत्, तत्रापि हलन्तेभ्यः अनभिधानादाचारक्विबभावः" इति व्याख्यत् ।

तत्र नागोजिभट्टः—"क्विबभाव इति, अत्र चेदमेव भाष्यं मानम्" इत्यवोचत् । अत्रायमाशयः—यदि हि अजन्तेभ्य इव हलन्तेभ्योऽपि आचारक्विबिष्टः, तर्हि तादृश-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्थले मिदचोऽन्त्यात्परत्वे प्रत्ययपरत्वे च विशेषसम्भवात् "तत्र नास्ति विशेषः" इति भाष्यमसङ्गतं स्यात्। अतो हलन्तेभ्य आचारक्विपोऽनभिधानमेव भाष्याभिप्रेतमिति।

एवञ्च लिट्यामि अकारानुबन्धः आशङ्कव्यः, नुड्विधायकसूत्रे तद्ग्रहणं मा भूदिति। लिट्यामि मकारस्य इत्संज्ञाया एव अनापत्तेः, तदर्थम् अकारानुबन्धोऽनावश्यक इति साधु निर्णीतम्।

हलन्तेभ्य आचारक्विबभावात्, अजन्तप्रत्ययान्तेभ्यस्तु मिदचोऽन्त्यात्परत्वे प्रत्ययपरत्वे वा अविशेषात्, ईह्यादिषु इजादिगुरुमत्सु तु आस्कासोराम्वचनरूपज्ञापकाश्रयणेन प्रत्ययपरत्वस्यैव निर्णीतत्वाच्च लिट्याम इत्संज्ञकत्वे फलाभावाद् इत्संज्ञापि नास्तीति सुष्ठु निर्णीतम्। अतः "नुट्सूत्रे ग्रहणं मा भूत्" इत्येतन्मात्रे अर्थे "आम अमन्त्रे" इति अकारानुबन्धः कार्यः। एवञ्च अकारानुबन्धकरणस्य नुट्सूत्रे अग्रहणम् एकमेव फलमित्यायातम्।

किन्तु भाष्ये लिट्यामो मकारस्य इत्संज्ञाभावे सुनिर्णीते सत्यपि अनुपदमेव "अथापि कथञ्चिदित्कार्यं स्यात् ?" इति चोदितम्। यदि हि हलन्तेभ्य आचारक्विप् सर्वथा नास्तीत्येव भाष्याभिप्रेतमिति भवान् मन्यते, तर्ह्ययं प्रश्न एव नोदियात्; प्रत्युत "स तर्हि अस्य एवमर्थः अनुबन्धः कार्यः, इहास्य ग्रहणं मा भूदिति" इति पूर्वप्रतीकमेवोद्धरेत्। सिद्धान्ती च "एवमपि न दोषः, क्रियते न्यास एव आम अमन्त्रे इति, शकन्धुन्यायेन सन्धिः" इति तत्परतयैव समाधात्। अनभिधानमेव भाष्याभिप्रेतं चेत्, अग्रहणायैव शकन्धुन्यायेन छेदः कृतः स्यात्, न तु इत्संज्ञापरित्राणाय।

अत एव कैय्यट एतत्प्रतीकव्याख्यावसरे—"न हि व्यञ्जनान्तेभ्य आचारे क्विप् नास्तीत्यत्र किञ्चित् प्रमाणमस्ति" इति, "अथापि कथञ्चिदित्कार्यं....."इति पृच्छतः, इत्संज्ञापरित्राणाय अकारानुबन्धकरणमावश्यकमिति अभिप्रयतः, पूर्वपक्षिणो हृदयं व्यवृणोत्। न ह्येदं कैय्यटस्य स्वाशयमात्रमिति भाति।

तत्र नागेशस्तु--"चिन्त्यमिदम्, 'तत्र नास्ति विशेषः' इति भाष्यस्य, अत्रत्यापिशब्दस्य, कथञ्चित्पदस्य च प्रमाणस्य सत्त्वात्" इति दूषितवान्।

"तत्र नास्ति विशेषः" इति येनोक्तं तेनैव "अथ कथञ्चित्" इति प्रश्नः कृतः। तत्र प्रथमप्रतीकस्य द्वितीयप्रतीकेन खण्ड्यमानत्वात्, द्वितीयप्रतीकस्य कैय्यटोक्तरीत्याऽपि व्याख्यातुं शक्यत्वाच्च नागोजिभट्टेन प्रदर्शितानां त्रयाणां प्रमाणत्वं दुरुपपादम्। अतो हलन्तेभ्य आचारक्विपोऽनभिधानमिति नागेशस्य पक्षं साधयितुं नेदमलं प्रमाणत्वेन।

"आम अमन्त्रे" इति विच्छिद्य, कथञ्चिद् आमो मित्त्वस्य प्रयोजनं स्याच्चेदपि न दोष इत्युक्तम्। तथा विच्छिद्यमाने अननुबन्धकपरिभाषया नुट्सूत्रे ग्रहणमपि न

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवति। तत्रैव लिङ्व्यामोऽकारानुबन्धकरणं विनाऽपि उपायान्तरं प्रदर्शितम्—"अथवा अस्त्वस्य ग्रहणम्, को दोषः …" इत्यादिना। आमो मकारस्य इत्वाभाव एव ग्रहणं प्रसज्यते। अतः "अथवा अस्त्वस्य …" इति भाष्याद् ज्ञायते लिङ्व्यामो मकारस्य इत्वाभावनिर्णयः साधुरिति। एतदपि पूर्वोक्तवादे मदनुकूलमिति ध्येयम्।

नुट्सूत्रे लिङ्व्यामो ग्रहणे अग्रहणे चाविशेषः। तथा हि–'कारि + आम्, चिकीर्ष + आम्' इति स्थिते परमपि नुटं बाधित्वा अयादेशे अल्लोपे च कृते ह्रस्वत्वनाशाद् नुट् न प्राप्नोतीति।

अत्र नागोजिभट्टः—"न च मालाशब्दादाचारक्विपि लोपाभावेन तत्र आबन्तत्वाद् नुट्प्राप्तिर्दुर्वारा इति वाच्यम्, भाष्यप्रामाण्येन आबन्तेभ्य आचारक्विपः अनभिधानात्" इत्यवोचत्। अयं भावः—माला इव आचरति = मालाति, तस्य लिटि 'माला + आम्' इति स्थिते नुट्सूत्रे अस्य ग्रहणमस्ति चेत्, नुट् प्राप्नोत्येव, नुट्निमित्तस्य कथमपि अनाशात्। एवञ्च ग्रहणेऽपि दोषाभावकथनपरभाष्यस्य असाङ्गत्यापत्तेः आबन्तेभ्योऽपि आचारक्विपोऽनभिधानमेव भाष्याभिप्रेतमित्यनुमीयते। न चास्माद् भाष्यात् लिट्येव आबन्तेभ्य आचारक्विपोऽनभिधानं लडादिषु तु अभिधानमेव इति वाच्यम्, "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" ( ६।१।६८ ) इति सूत्रस्थभाष्यप्रामाण्यात्। तत्र हि—"संयोगान्तलोपेनैव सेत्स्यमाने, सूत्रे हल्द्वयग्रहणम्, अपृक्तग्रहणम्, तिसिग्रहणं चाकर्तुम् शक्य" (म० भा०, पञ्चमो भागः, पृ० ६७) इत्युक्तम्। तत्रोद्योते—"ङ्यावन्तात् तिस्योरनभिधाने इदमेव भाष्यं मानम्" इत्युक्तम्।

एवञ्च आभ्यां भाष्याभ्याम् आबन्तादाचारक्विपः सर्वथा अनभिधानमेवेति तदाशयः।

नेदं युक्तम्, तथा हि - पूर्वभाष्यादेव ज्ञायते आबन्तेभ्य आचारक्विपि कृते क्विबन्तत्वाद् अङ्गस्य आबन्तत्वं ( 'ह्रस्वनद्यापो नुट्' इति हि आबन्तादङ्गादामि परे विधिः, अत्र च क्विबन्तमङ्गम् ) नास्तीति कृत्वा नास्ति नुटः प्रसङ्ग इति। यच्च "हल्ङ्याब्भ्य…" इत्यत्र भाष्य उक्तम्, तस्मादपि "ङ्याब्ग्रहणं सोरेव विशेषणम्, न तिस्योरपि" इत्येव ज्ञायते। अर्थात् "अपृक्तलोपः संयोगान्तलोपो विज्ञायते चेत्, सूत्रे द्विहल्पृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यम्" इत्येतावान् भाष्यग्रन्थः ङ्याबन्तात् तिस्योरनभिधानं बोधयितुं नालं भवतीति। मदुक्तरीत्या अपि भाष्यासाङ्गत्यस्य परिहारलाभात्।

ङिसाहचर्याद् आपोऽपि सुलोपस्यैव विधानात् तलोपो नेत्युक्त्वा मालेवाचरत् = 'अमालात्' इति रूपं कौमुद्यादिषु निष्पादितं चात एव सङ्गच्छते। मदुक्तरीत्या तु ङिसाहचर्याश्रयणमपि नावश्यकम्, 'अमाला + त्', 'अमाला + स्' इत्यादिषु तसयोः क्विबन्तात्परत्वमाश्रित्य सूत्राप्रवृत्तेः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ह्रस्वनद्यापो नुडिति सूत्रे हल्ङ्यादिसूत्रे च यद् भाष्यं नागेशः स्वाभिमतानुकूलतया व्याचख्यौ, तदेव भाष्यद्वयं मदभिमतानुकूलतयाऽपि व्याख्यातुं निष्प्रयासं शक्यत इति प्रादीदृशम्। अतो हलन्तेभ्य आबन्तेभ्यश्च आचारक्विपोऽनभिधानं समर्थयितुं नागेशः प्रमाणान्तरमन्विच्छेत्। तावन्न तस्यानभिधानत्वम्।

"प्रत्ययोत्तरपदयोश्च" (७।२।९८) इति सूत्रस्थं भाष्यं (षष्ठो भागः, पृ० १५९) द्रष्टव्यम्। प्रत्यये उत्तरपदे च एकार्थयोर्युष्मदस्मदोर्मपर्यन्तयोस्त्वमौ आदेशौ विधीयेते। अत्र 'त्वया कृतम्', 'मया कृतम्' इत्यादिषु नित्यस्यापि सुब्लुकोऽन्तरङ्गेण आदेशेन बाध्यमानत्वाद् एकवचनसत्त्वात् 'त्वमावेकवचने' इत्यनेनैव सूत्रमिदं गतार्थम्। तथा च सिद्धे सति प्रत्यये उत्तरपदे च परतः त्वमादेशशासनं व्यर्थीभूय "अन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गो लुक् प्रवर्त्तते" इति परिभाषां ज्ञापयति—इति भाष्ये उक्तम्। तत्र नागेशः—"न च प्रत्ययग्रहणस्य प्रातिपदिकप्रकृतिकाचारक्विपि चारितार्थ्यात् कथं सम्पूर्णसूत्रस्य ज्ञापकत्वमुच्यते ? एतद्भाष्यप्रामाण्येन नुड्विधायकसूत्रप्रामाण्येन च एताभ्यामाचारक्विपोऽभावात्। एतद्भाष्यप्रामाण्यादेव च एकार्थयोर्युष्मदस्मदोः प्रातिपदिकप्रकृतिकणिचोऽपि अनभिधानं बोध्यम्" इत्यवोचत्।

अयं भावः—त्वमिवाचरतीत्यर्थे 'युष्मद्'-प्रातिपदिकात् क्विपि कृते 'युष्मद्+क्विप्' इति स्थिते एकवचनस्य अनुत्पन्नत्वात् "त्वमावेकवचने" (७।२।९७) इत्यनेन त्वादेशासिद्धया तदर्थं प्रत्ययोत्तरपदयोश्चेत्यत्र प्रत्यये परतः त्वमादेशकरणं सार्थकमेव। तथा सति सम्पूर्णसूत्रस्य वैय्यर्थ्यकथनपरं भाष्यमसङ्गतं स्यात्। अतो ज्ञायते युष्मदस्मद्भ्यां आचारक्विपोऽभाव एव भाष्याभिप्रेत इति।

एतस्मिन् विषये नुड्विधायकसूत्रस्थभाष्यं प्रमाणं भवितुं नार्हतीति प्रागहं न्यरूरुपम्। अथ इदं भाष्यमपि न तन्मतसाधनाय सम्पद्यत इति तावद् वक्ष्यामि। तथा हि—

"सिद्धे सति यत् प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तद् ज्ञापयति....." इति भाष्यग्रन्थो मदनुकूलतयाऽपि व्याख्यातुं शक्यते, यथा—"एकार्थयोः युष्मदस्मदोः आचारक्विपि त्वमौ आदेशौ नेष्टौ" इति। आचारक्विप् इष्ट एव, त्वमादेशावेव नेष्टावित्यर्थः।

अथवा - सम्पूर्णसूत्रस्य ज्ञापकत्वं यद्यपि प्रथमत उक्तम्, तथापि अनुपदमेव "त्वद्धितम्", "त्वत्पुत्रः" इत्यादिषु तव-तुभ्याद्यादेशबाधनाय सम्पूर्णसूत्रं चरितार्थमेवेति निरूपयिष्यमाणत्वात् पूर्वं प्रत्ययग्रहणमात्रस्य आचारक्विपि चारितार्थ्यं न वर्णितम्—इति कृत्वा तावता भाष्यकृता ताभ्याम् आचारक्विप् नाभिमतः, इत्यनुमातुं न शक्यते।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

यत्तु—"त्वं सुन्दरः पुत्रो यस्य स इत्यादौ त्रिपदबहुव्रीहौ त्वमयोरभावाय प्रत्ययोत्तरपदयोश्चेत्यत्र विभक्तावित्यनुवर्त्यम्। तथा सति 'युष्मद्+क्विप्' इत्यादौ प्रत्ययपरकविभक्तेरेवाभावात् सूत्रस्य तादृशस्थले अप्रवृत्तेः 'अनभिधानमेवेति' नागेशस्य दुराग्रह एव"—इति वाक्यार्थचन्द्रिकादौ दृश्यते, तत् प्रशंसामः, न तु युक्तं मन्यामहे, विभक्तिग्रहणाननुवृत्तेरेव युक्तत्वात्। तथा हि—

त्वं सुन्दरः पुत्रो यस्येत्यर्थे 'युष्मत्सुन्दरपुत्रः' इति सिद्धये तावद् न तदनुवृत्तिरावश्यकी। तदभावेऽपि उत्तरपदपरकत्वमात्रस्य अभावेनापि सूत्राप्रवृत्त्या इष्टसिद्धेः। कर्मधारयोत्तरपदे तु 'त्वत्सुन्दरपुत्रः' इति च भवति।

न चैवं सति विभक्तिग्रहणाननुवृत्तौ भाष्योक्तं तवममादिबाधकत्वं न स्वरसतः सङ्गच्छत इति वाच्यम्, सम्पूर्णसूत्रस्य चारितार्थ्यवर्णनकाले परिभाषाभावाद् 'युष्मद्+ङस्+पुत्र+सु' इति स्थिते आदेशस्यैव अन्तरङ्गतया पूर्वं प्रवृत्तेः विभक्तिग्रहणस्य अनुवृत्त्या विनाऽपि बाधकत्वकथनपरभाष्यस्य स्वरसत एव सङ्गतेः।

किञ्च, विभक्तावित्यस्य प्रत्ययोत्तरपदयोश्चेत्यत्र अननुवृत्तिपक्ष एव चकारग्रहणस्यापि स्वारस्यमिति भाति। अन्यथा हि प्रत्ययोत्तरपदयोरिति द्वन्द्वनिर्देशे समुच्चायकस्य चकारस्य का आवश्यकता स्यात्? अतः "त्वमावेकवचने", "प्रत्ययोत्तरपदयोश्च" इति द्विसूत्र्याः पर्यवसितोऽयमर्थः—"एकवचने विद्यमानयोः युष्मदस्मदोः त्वमौ स्तः, विभक्तौ, प्रत्यये, उत्तरपदे च परतः" इति।

ज्ञापितया परिभाषया पूर्वं सुब्लुकि कृते सिद्धान्तपक्षे विभक्तिग्रहणानुवृत्तिरनर्थिकैव स्यात्। अथवा अनुवृत्तिसामर्थ्यात् पूर्वं आदेशस्यैव प्रवृत्त्या ज्ञापकस्य स्वांशे चारितार्थ्यं न स्यात्। कौमुद्यादिषु च विभक्तिग्रहणानुवृत्तिं विनैव वृत्तिः कथिता।

यच्च एकार्थयोः प्रातिपदिकप्रकृतिकणिचोऽपि अनभिधानमित्युक्तम्, तस्यायं भावः—त्वामाचष्टे इत्यर्थे "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति चुरादिगणसूत्रेण णिचि कृते 'युष्मद्+णिच्' इत्यत्र एकवचनस्यानुत्पन्नत्वात् "त्वमावेकवचने" इत्यनेन असिद्धया तत्सिद्धये प्रत्ययग्रहणस्य चारितार्थ्यात् सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यासङ्गतिः। ततो ज्ञायते एकार्थयोर्युष्मदस्मदोः प्रातिपदिकप्रकृतिकणिचोऽभाव इति। इदमप्ययुक्तम्, प्रसक्तभाष्यग्रन्थस्य मदुक्तव्याख्यानेन असाङ्गत्यपरिहारात्।

अतो ममायं पक्षो निर्विघ्नमुपसंह्रियते—"युष्मदादिभ्य आचारक्विप् तु न, सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्। 'ह्रस्वनद्याप....' इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च। एवमेकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽपि अनभिधानं बोध्यम्" इति परिभाषेन्दुशेखरग्रन्थोऽपास्त इति शम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# समासान्तानामवयवत्वम्

**डॉ० एस्० टी० के० एस्० रङ्गाचार्युलुः**

प्राध्यापकः,

एस्० वी० यू० पी० के० जे० ओ० डी० विद्यालये,

राजामुन्द्री ( आन्ध्रप्रदेशः )

❀❀❀

भगवान् पाणिनिर्द्वितीयाध्याये समासान् प्रदर्श्य समासान्तकार्याणि प्रदर्शयामास। तेन टजादिसमासान्तानां तद्धितसंज्ञा, तन्मूलकटिलोपादिकार्याणि लाघवेन सिद्ध्यन्ति। एतत्कार्यलाघवार्थमेव समासान्तान् द्वितीयाध्याये न विदधे; किन्तु पञ्चमाध्यायचतुर्थपादे "समासान्ताः" ( पा० सू० ५।४।६८ ) इत्यधिकृत्य समासान्तविधयोऽकारिषत।

अत्र समासान्तानां समासचरमावयवत्वम्, उत उत्तरपदावयवत्वं वा ? आहोस्वित् समुदायरूपवाक्यावयवत्वं वा ? इति शङ्का समजनि। तथा हि—बहवो दण्डिनो यस्यां सा 'बहुदण्डिका' इत्यत्र 'बहु जस् दण्डिन् जस्' इत्यलौकिकविग्रहे बहुव्रीहिसमासे सुपः लुकि 'इनः स्त्रियाम्' (पा० सू० ५।४।१५२) इति सूत्रेण कपि नलोपे टापि च कृते 'बहुदण्डिका' इति भवति। अत्र च कपि परे 'स्वादिष्वसर्वनामस्थाने' (पा० सू० १।४।१७) इति पदत्वस्य 'बहुदण्डिन्' इति समुदायनिष्ठतया, इनिप्रत्ययान्तत्वनिमित्तकप्रातिपदिकत्वस्य दण्डिन्शब्दमात्रवृत्तितया, समाससंज्ञानिमित्तकप्रातिपदिकत्वस्य यदागमन्यायेन कबन्तनिष्ठतया च प्रातिपदिकत्वपदत्वयोः सामानाधिकरण्याभावेन प्रातिपदिकसंज्ञकपदस्य नान्तस्यात्राभावेन नलोपो न प्राप्नोति, अत इयं विचारणा।

"समासान्ताः" (५।४।६८) इति सूत्रे अन्तशब्दः चरमावयववाची। समासपदं समाससंज्ञाप्रवृत्त्यर्थं कल्पितालौकिकविग्रहवाक्यपरम्। अतः समाससंज्ञासमकालमेव अलौकिकविग्रहावस्थायां समासान्ताः प्रवर्तन्त इति सिद्धान्तः। अत एव वृत्तिकारेण "समासस्य अन्तावयवा एकदेशा भवन्ति। तद्ग्रहणेन गृह्यन्त इति वेदितव्यम्" इत्युक्तम्। अत एव 'बहुगोमत्का, बहुकुमारीकः' इत्यादिरूपाणि सिद्ध्यन्ति। 'बहु जस् गोमत् जस्' इत्यलौकिकावस्थायामेव समाससंज्ञाप्रवृत्तेः प्राक् "शेषाद्विभाषा" (८।४।१५४) इति कपि ततस्समासे सुब्लुकि 'बहुगोमत्क' इति जाते तया कबन्तत्वेन उगिदन्तत्वाभावात् ङीपोऽप्रवृत्तौ टापि 'बहुगोमत्का' इति भवति। अन्यथा कपः प्रागेव समासे सुब्लुकि

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समुदायरूपप्रातिपदिकत्वस्य "उगितश्च" इति ङीपि ततो कपि टापि 'बहुगोमतीका' इति रूपापत्तिर्दुर्वारा। यद्यपि बहुव्रीहिसमासोत्तरं ङीप् कप् च उभयं प्राप्नोति, तथापि अनुक्तसमासान्तत्व-शेषाधिकारस्थत्व-बहुव्रीहित्वरूपाधिकापेक्षत्वेन बहिरङ्गात्कपः प्रागन्तरङ्गत्वेन उगिल्लक्षणङीपः प्राप्तेः 'बहुगोमतीका' इत्येव स्यात्, न तु 'बहुगोमत्का' इति। एवं बहवः कुमार्यो यस्य स 'बहुकुमारीक' इत्यत्र 'बहु जस् कुमारी जस्' इत्यलौकिकविग्रहावस्थायामेव समाससंज्ञाप्रवृत्तेः प्राक् "नद्यृतश्च" (५।४।१५३) इति कपि ततस्समासे, सुब्लुकि अन्यपदार्थविशेषणतापन्नार्थप्रातिपदिकान्तस्य स्त्रीप्रत्ययान्तत्वाभावात् "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वस्याप्रवृत्तौ 'बहुकुमारीक' इति रूपं सिद्ध्यति। अन्यथा कपः प्रागेव समासे 'बहुकुमारी' इति जाते उपसर्जनह्रस्वश्च, कप् च उभयोः प्राप्तयोः नद्युत्तरपदकत्वबहुव्रीहित्वरूपविशेषापेक्षत्वेन बहिरङ्गात्कपः पूर्वमेव अन्तरङ्गत्वेन ह्रस्वे ततः कपि 'बहुकुमारिक' इत्येव भवति, न तु 'बहुकुमारीकः'। न ह्यत्र "न कपि" (७।४।१४) इति ह्रस्वनिषेधः, तस्य 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन 'केऽणः' इत्यस्यैव बाधकत्वात्, न तु उपसर्जनह्रस्वस्य। अपि च उपसर्जनह्रस्वप्रवृत्तिकाले कबनुत्पत्त्या कप्परकत्वाभावेन "न कपि" इति निषेधाप्रवृत्तेः। अतः समासान्तानां समासार्थं कल्पितालौकिकविग्रहावस्थायामेव प्रवृत्तिर्वाच्या। अत्र च "तादर्थ्यात् ताच्छब्द्यम्" इत्यादि भाष्यमेव प्रमाणम्। अलौकिकविग्रहवाक्यस्य समासप्रवृत्त्यर्थकत्वेन समासार्थत्वात् समासपदेन समासार्थालौकिकवाक्यस्य ग्रहणम्, तत्रैव समासान्तानां प्रवृत्तिश्च सप्रमाणमेव।

एवं तर्हि कल्पितालौकिकविग्रहावस्थायां प्रवृत्तास्समासान्ताः समुदायस्यान्तावयवो वा आहोस्विद् उत्तरपदस्यावयवो वा ? इत्यपि विचारणीयम्।

दीक्षितादयः कल्पितालौकिकविग्रहावस्थायाम् उत्तरपदस्यान्तावयवत्वेन समासान्ताः प्रवर्तन्त इति प्रतिपादयामासुः। प्रौढमनोरमायां "अकृते एव समासेऽलौकिकप्रक्रियावाक्य एव उत्तरपदस्यावयवीभूय समासान्तः प्रवर्त्तत" इति दीक्षितेनोक्तम्। अत एव द्विपुरी, द्विधुरी इत्यादिप्रयोगोपपत्तिः। द्वयोः पुर्योः समाहारः 'द्विपुरी' इत्यत्र 'द्वि ओस् पुर् ओस्' इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रेण समाहारार्थे द्विगुसमासे "ऋक्पूरब्धूः पथामानक्षे" (५।४।७४) इति सूत्रेण 'अ' इति समासान्तप्रत्यये 'द्विपुर' इति जाते तस्य "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति वार्तिकेन स्त्रीत्वे "द्विगोः" (४।१।२१) इति सूत्रेण ङीपि 'द्विपुरी' इति भवति। यद्यत्र समासान्तस्य उत्तरपदस्यान्तावयवत्वमनङ्गीकृत्य समासस्यैव अन्तावयवत्वमित्युच्यते, तदा समुदायरूपसमासस्यैवादन्तत्वं वर्तते, न तु उत्तरपदस्य इति 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वार्तिकस्याप्रवृत्त्या स्त्रीत्वाभावेन ङीप् न प्राप्नोतीति द्विपुरीति न सिद्ध्यति। अत एव "गोस्त्रियोरुपसर्जनस्य" (१।२।४८। इति सूत्रे 'अन्तग्रहणं किमर्थम् ? अन्तावयवो यथा स्यात् प्रयोजनं 'द्विधुरी', द्विगोरिति ङीप्' इति कैयटेनोक्तम्। अत्र च "सरूपाणामेकशेष

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एकविभक्तौ" (१।२।६४) इति सूत्रस्थभाष्यं प्रमाणम् । तत्र हि—ऋक् च ऋक् च ऋचौ इत्यत्र "ऋक्पूरब्धूः पथामानक्षे" (५।४।७४) इति सूत्रेण समासान्तः अप्रत्ययः प्राप्नोति । तथा "सरूपाणामेकशेष एकविभक्तौ" इत्येकशेषः प्राप्नोति । उभयोः प्राप्तयोः परत्वात् समासान्ते ऋक्–ऋच्शब्दयोः असारूप्याद् एकशेषो न प्राप्नोतीति दोषप्रतिपादनमकरोत् । "ऋक् च ऋक् च ऋचौ समासान्ते कृते असारूप्याद् एकशेषो न प्राप्नोति । इदमिह सम्प्रधार्यं समासान्तः क्रियताम् एकशेष इति, किमत्र कर्तव्यम् ? परत्वात् समासान्तः । समासान्ते च दोषो भवति"इति तत्रस्थभाष्यम् । एतच्च भाष्यम्—"समासार्थस्य उत्तरपदस्य अन्ताः समासान्ता इत्यपि भाष्यकारस्य मतमिति ऋगृच्शब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः" इति कैयटेन व्याख्यातम् । यदि समासान्तः समुदायरूपसमासस्यैवान्तावयवस्तदा समुदायस्य वैरूप्याभावात् समासान्ते कृते वैरूप्याद् एकशेषो न प्राप्नोतीति दोषोद्भावनं भगवतो भाष्यकृतोऽसङ्गतं स्यात् । तस्मात् समासान्ताः कल्पितालौकिकविग्रहावस्थायाम् उत्तरपदस्यैव अवयवीभूय प्रवर्तन्त इति दीक्षितादीनामाशयः ।

एवं समासे कृत एव समासान्ताः प्रवर्तन्त इत्यपि पक्षो दृश्यते । अयं च पक्षः "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ"(६।२।१९७) इति भाष्ये "एवं तर्हि इदमिह संप्रधार्यम्–अन्तोदात्तत्वं क्रियतां समासान्त इति । किमत्र कर्तव्यम् ? परत्वादन्तोदात्तत्वम् । नित्यः समासान्तः । कृतेऽपि अन्तोदात्तत्वे प्राप्नोति, अकृतेऽपि प्राप्नोति" इति वर्तते । समासे कृते तदा स्वरस्य समासान्तस्य च प्राप्तिः, तदा उभयोः प्रतिषेधो घटते । यदि समासान्तः समासात् प्रागेव प्रवर्तते, अथवा उत्तरपदस्यावयवीभूय प्रवर्तत इत्युच्यते, तर्हि समासे कृते विप्रतिषेधो नैव घटते । उक्तञ्च कैयटेन–"एवं तर्हि इदमिहेति । यदि कृते समासे समासान्तः क्रियत इति पक्षस्तदेयं संप्रधारणा" इति । एतद्भाष्यपर्यालोचने समासे कृत एव समासान्ताः प्रवर्तन्त इत्यपि बोध्यते ।

वस्तुतस्तु उपर्युक्तपक्षद्वयमपि भाष्यसिद्धान्तविरुद्धम् । तथा हि—समासान्त इत्यस्य समासस्य समुदायस्य अन्तः चरमावयव इत्यर्थः । "न पदान्तद्विर्वचन....."(१।१।५८) इत्यादि सूत्रे अन्तशब्द इव अत्रापि अन्तशब्दः चरमावयववाची । समासशब्दः समाससम्बन्ध्यलौकिकविग्रहवाक्यपरः । अत एतादृशसमुदायस्य कल्पितालौकिकविग्रहावस्थायामेव अवयवीभूय प्रवर्तते । अत्र च "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति सूत्रस्थं भाष्यमेव प्रमाणम् । तत्र हि—"इदं तर्हि उक्तम्—कपि कृते अनन्त्यत्वाद् ह्रस्वत्वं न भविष्यति । इदमिह संप्रधार्यम् । कप् क्रियतां ह्रस्वत्वमिति । किमत्र कर्तव्यम् ? परत्वात् कप् । अन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् इति भगवता पतञ्जलिना

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उपपादितम्। इदमेव सिद्धान्तभाष्यम्। एतद्विरोधात् "सरूपाणामेकशेष एकविभक्तौ" (१।२।६४) इति सूत्रस्थभाष्यम्, "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" (६।२।१९७) इति सूत्रस्थभाष्यं च एकदेश्युक्तिरेव। अतो न तद्विरोधः। अत्रैव भाष्ये—"अयं च पक्षः "गोस्त्रियोरुपसर्जनस्य" 'अन्तः' इति सूत्रस्थन्याययुक्तभाष्यसम्मत इति तद्विरोधादिदं भाष्यमेकदेश्युक्तिरिति ध्वनितम्' इति वैयाकरणनागेशेन स्पष्टीकृतम्।

किञ्च, सरूपाणामिति सूत्रस्थभाष्यं दूषणपरवार्तिकस्य व्याख्यानपरत्वेन न तत्र भाष्यकारस्य मतम्। अत एव उद्द्योते भाष्यकारस्य मतमिति कैयटग्रन्थस्य प्रतीकमादाय "एवंविधं भाष्यं न दृश्यते इति चिन्त्यमिदम्" इति नागेशेन उक्तम्। अत एव उपशरदम्, उपसमिधमित्यादि रूपाणि सिद्ध्यन्ति। शरदः समीपमिति लौकिकविग्रहे शरद् ङस् उप इति अलौकिकविग्रहे अव्ययीभावसमासे सुपः लुकि उप इत्यस्य पूर्वनिपाते उपशरद् इति जाते समुदायस्य अव्ययीभावे "शरत्प्रभृतिभ्यः" (५।४।१०७) इति टचि समासान्ते उपशरद इति जाते ततस्सुपि तस्य 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' ( २।४।८३ ) इत्यमादेशे उपशरदमिति भवति। अत्रालौकिकक्रियावस्थायामेव समुदायस्यावयवत्वेन टचः प्रवृत्तेः, तदनन्तरमेव अव्ययीभावसमासे अदन्तत्वाव्ययीभावत्वयोस्सत्त्वात् 'नाव्ययीभावादिति' अमादेशः सिद्ध्यति। अन्यथा उत्तरपदमात्रस्यावयवत्वस्वीकारे उत्तरपदमेव अदन्तं भवति, न तु समुदायरूपसमास इति अमादेशो न सिद्ध्यति। ननु उत्तरपदस्य टचि कृते उत्तरपदमदन्तमिति 'अवयवावयवस्समुदायावयवो भवति' इति न्यायेन समुदायस्यापि अदन्तत्वेनामादेशः सिद्ध्यत्येवेति चेत्, न, समासान्ता इत्यत्र तादर्थ्यात् ताच्छब्द्यबोधकत्वाङ्गीकारेण समुदायरूपप्रक्रियावाक्यस्यैवावयवत्वेन टचः प्रवृत्तेः "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यत्र सहजतया मुख्यस्याकारान्तस्यैव ग्रहणम्, न तु अवयवावयविन्यायेन कल्पितगौणस्याकारान्ताव्ययीभावस्य इत्यमादेशानापत्तिदुर्वारत्वात्। किञ्च 'अन्तः' इति सूत्रे समासस्याऽन्तोदात्तत्वमुत्तरपदस्य वा इति विकल्पे आद्ये इदं प्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा, अस्तु तर्ह्युत्तरपदस्येत्युक्त्वा तत्पक्षेऽनृच इत्यत्रान्तोदात्तत्वसिद्धिरित्यर्थपरभाष्यविरोधेन तन्न्यायाश्रयणे प्रमाणाभावाच्च। एवं तर्हि 'द्विधुरी, द्विपुरी' इत्यादौ 'द्वि ओस् पुर् ओस्' इत्यलौकिकविग्रहावस्थायामेव समुदायरूपसमासस्यैव अन्तावयवत्वेन "ऋक्पूरब्धूः पथामानक्षे" इति अप्रत्यये समुदायस्यैव अदन्तत्वेन उत्तरपदस्य अकारान्तत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वार्तिकाप्रवृत्त्या स्त्रीत्वाभावे द्विगोरिति ङीप् न प्राप्नोतीति चेत्, लिङ्गानुशासनप्रकरणवदस्य वार्तिकस्यापि लोकसिद्धानुवादकत्वेन अपूर्वविधित्वाभावात्। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य इत्यनेन लिङ्गविभागस्य लोकव्यवहारनिर्णेयत्वमेव नापूर्वविधेयत्वमिति स्पष्टमवगम्यते। तदनुसारेण 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वार्तिकस्यापि

CC-0. Sampurnanand University Collection. Digitized by eGangotri

त्रिलोकीत्यादौ लोकसिद्धस्त्रीत्वानुवादकम्, पञ्चराजमित्यादौ लोकसिद्धनपुंसकत्ववति स्त्रीत्वाभावमात्रबोधकत्वमेव। एतच्च "लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायत्वेन च अत्रत्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात्। तदुक्तम्—"लिङ्गमशिष्यं लोकाशयत्वाल्लिङ्गस्य' इति "समासान्ताः" इति सूत्रे भाष्ये" इति शब्दरत्ने स्पष्टीकृतम्। तस्मात् स्त्रीत्वस्य लोकसिद्धत्वेन द्विधुरी, द्विपुरीत्यादौ ङीप् सिद्धयतीति कल्पितालौकिकविग्रहावस्थायां समुदायरूपसमासस्यैव अन्तावयवत्वेन समासान्ताः प्रवर्तन्त इति पक्षे न कश्चिद्दोषः।

नन्वेवं 'बहुदण्डिका नगरी' इत्यादौ समुदायरूपसमासस्य कप्प्रत्यये समाससंज्ञानिमित्तकप्रातिपदिकत्वं यदागमन्यायेन कबन्त एव वर्तते। कप्प्रत्ययनिरूपितपदत्वं तु कपः पूर्वभागे वर्तत इति प्रातिपदिकत्वपदत्वयोस्सामानाधिकरण्याभावेन कथं नलोप इति चेत्, लोकसिद्धयदागमन्यायस्य अनित्यत्वात् समासत्वनिमित्तकप्रातिपदिकत्वं कपः पूर्वभागे 'बहुदण्डिन्' इत्यत्रापि सत्त्वात् सामानाधिकरण्यमस्तीति नलोपः सिद्धयति। यदागमन्यायस्यानित्यत्वाश्रयणे 'बहुचर्मिका' इति भाष्योदाहरणमेव प्रमाणम्। अन्यथा तत्रापि यदागमन्यायेन कबन्त एव पदत्वाद् नान्ते नास्तीति नलोपो न स्यात्। यद्वा, 'बहुदण्डिका' इत्यत्र कप्प्रत्ययनिरूपितपदत्वं यथा 'बहुदण्डिन्' इति समुदाये वर्तते, एवं 'दण्डिन्'शब्दमात्रेऽपि कप्प्रत्ययनिरूपितपदत्वं वर्तत एव। तथा हि "उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः" इति वार्तिकस्य प्रत्याख्यानाय भाष्यकृत्कृतस्वादिषु इति योगविभागपक्षे स्वादिषु परतः पूर्वं पदं भवति, मध्ये चेत् सुबन्तं तदपि पदं भवतीति व्याख्यानेन कप्प्रत्ययनिरूपितपदत्वं 'बहुदण्डिन्' इति समुदाये अवयवीभूत-'दण्डिन्' इत्युत्तरपदेऽपि अस्त्येवेति प्रातिपदिकत्वपदत्वयोस्सामानाधिकरण्यसत्त्वाद् नलोपः सिद्धयति।

यद्यपि "कुत्सिते" (५।३।७४) इति भाष्ये सुबन्तात्तद्धितोत्पत्तिरिति भाष्यकारीयसिद्धान्ततया समासान्तानां तद्धितसंज्ञाविधानेन 'परम सु राजन् सु' इत्यलौकिकवाक्यस्य सुबन्तत्वाभावात् समासान्तो न प्राप्नोति, तथापि सुबन्तात्तद्धितोत्पत्तिरित्यस्य सार्थकतद्धितोत्पत्तिरित्यर्थतया समासान्तस्य स्वार्थिकत्वेन तेषां प्रकृत्यर्थातिरिक्तार्थाभावेन सुबन्तात् तद्धितोत्पत्तिरिति सिद्धान्तो न समासान्तविषयक इति न तद्विरोधः। किञ्च, समासान्तप्रकरणे "ङ्याप्प्रातिपदिकात्" (४।१।१) इति प्रातिपदिकाधिकारसम्बन्धोऽपि नास्ति। उक्तञ्च शब्दरत्ने—समासान्तेषु "ङ्याप्प्रातिपदिकात्" इत्यस्यासम्बन्ध एव। तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वाभावादिति भावः" इति। तस्मात् 'परम सु राजन् सु, बहु जस् दण्डिन् जस्' इत्यादिसमुदायस्य तदानीं प्रातिपदिकत्वाभावेऽपि कल्पितालौकिकविग्रहावस्थायामेव समुदायरूपसमासस्य चरमावयवतया "समासान्ताः" प्रवर्त्तंत इति नागेशभट्टप्रभृतीनां सिद्धान्तः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्र च समासान्तो विभक्तेः पूर्वभागे परभागे वा इति मतभेदोऽपि वर्तते। विभक्तेः पूर्वभागे प्रवृत्तौ तु प्रथमतः समासान्तप्रत्यये ततस्समासे सुपः लुकि 'बहुगोमत्का' इत्यादि सिद्ध्यन्ति, परभागे प्रवृत्तौ तद्धितान्तत्वेन प्रातिपदिकत्वाल्लुकि, पुनस्सुपि च अकृते प्रत्ययलक्षणेन सुबन्ततया समासे 'बहुगोमत्का' इत्यादि सिद्ध्यन्ति। पक्षद्वये विभक्तेः परभागे प्रवृत्तिरिति द्वितीयपक्ष एव सिद्धान्तः। अत एव "प्रत्ययस्थात्कात् पूर्वस्यात इदाप्यसुपः" (७।३।४४) इति सूत्रभाष्योदाहृतं 'बहुचर्मिका' इति रूपं सङ्गच्छते। तत्र 'बहु जस् चर्मन् जस्' इति विग्रहे कपि जसो लुकि ततस्समासे सुपः लुकि 'बहुचर्मक' इति जाते टापि प्रत्ययस्थादिति इत्वे 'बहुचर्मिका' इति भवति। विभक्तेः पूर्वभागे प्रवृत्तिरिति पदे तु सुपः परत्वेन इत्वाप्रवृत्त्या 'बहुचर्मिका' इति भाष्यप्रयोगासङ्गतिः स्पष्टैव।

तस्मात् समासान्तानां कल्पितालौकिकविग्रहावस्थायां समुदायरूपसमासस्य अन्तावयवीभूय विभक्तेः परभाग एव प्रवृत्तिरिति तत्त्वम्।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# महाकविकालिदासस्य निरङ्कुशत्वम्

**डॉ० रामाशीषपाण्डेयः**
आचार्योऽध्यक्षश्च,
संस्कृतविभागस्य
मारवाड़ीमहाविद्यालये
राँची ( बिहार-प्रदेशे )

❀ ❀ ❀

कवयो निरङ्कुशा भवन्तीति विदितमस्ति विदुषां समाजे सर्वत्र। आचार्यमम्मटेन काव्यप्रकाशस्यादौ यन्मङ्गलाचरणमुपस्थापितं तदपि कवीनां निरङ्कुशत्वं समर्थयति[1]। तत्र कवेर्भारती नियतिकृतनियमरहितेति स्पष्टम्। पुनश्च किं नाम निरङ्कुशत्वमिति जिज्ञासायामङ्कुशत्वं नियमबन्धत्वमङ्कुशरहितत्वं परम्परागताचारादिबन्धने शिथिलत्वं निरङ्कुशत्वमिति। यथाऽङ्कुशो गजानां नियमन' ा समर्थो भवति। अङ्कुशभयाद् गजो गजसञ्चालकानां पुरुषाणां गजसञ्चालने महाव्रतस्य पालकानां महावतामाज्ञामावहति। यो हि गजो गजसञ्चालकानां महावतां पुरुषाणामाज्ञां न पालयति, स गजो निरङ्कुश इति कथ्यते। अननैव प्रकारेण सामान्यविशेषनियमैर्नियमिताः सांसारिका नियमाः समाजे प्रचलिताः। सामान्येन सामाजिकैरनुमोदिता नियमाः काव्यशास्त्रीयाश्च नियमा यदा कविभिर्निराद्रिताः शैथिल्यसम्पन्ना भवन्ति, तदा कवयोऽपि निरङ्कुशाः कथ्यन्ते। कवीनां निरङ्कुशत्वे तेषां काव्येषु कथायोजनायाम्, चरित्रनिर्माणे, रसनिरूपणे, सूक्तिसमायोजने, शब्दप्रयोगे, प्रकृतिचित्रणादिकार्ये सामान्यमार्गातिरिच्य विशिष्टमार्गाश्रयत्वं परम्परागतनियमोल्लङ्घनत्वं क्रान्तदर्शित्वञ्चेति प्रसिद्धम्।

महाकविकालिदासो विश्वश्रुतः कविः काव्यमूल्यस्य स्थापनायां नितरां निरतः परम्परागतमूल्यपरिवर्तने समासक्तः क्रान्तद्रष्टेति प्रसिद्धः। कवेरस्य निरङ्कुशत्वदर्शने तस्य काव्यानां कथायोजनायाम्, चरित्रविधाने, रसयोजनायाम्, शब्दप्रयोगे, सूक्तिसमायोजने, प्रकृतिचित्रणप्रभृतिकार्ये च काव्यमूल्यस्य स्थापनायां स्वतन्त्रमार्गाश्रयत्वं मार्गभिन्नत्वं परम्परागतनियमरहितत्वं यच्च क्रान्तदर्शित्वं तत्सर्वं समीक्षणीयमिति शोधपत्रस्यास्य प्रयोजनम्। निरङ्कुशत्वं तु कवीनामलङ्करणं भवति। सर्वे कवयो निरङ्कुशा भवन्ति, परं कालिदासस्य कीदृशं निरङ्कुशत्वमिति विशेषरूपेणात्र प्रस्तूयते।

---

१. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥ (का० प्र० १।१)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

**कथायोजनायां निरङ्कुशत्वम् —**

कालिदासस्य काव्येषु द्वे खण्डकाव्ये, द्वे महाकाव्ये, त्रीणि च रूपकाणि सन्ति। तत्र खण्डकाव्येषु ऋतुसंहारं मेघदूतञ्चेति विश्रुतम्। महाकाव्येषु रघुवंशं कुमारसम्भवञ्चेति प्रसिद्धम्। कवेरस्य नाट्यग्रन्थेषु—अभिज्ञानशाकुन्तलं मालविकाग्निमित्रं विक्रमोर्वशीयञ्चेति। ऋतुसंहारखण्डकाव्यं तु वस्तुतः ऋतुवर्णनकाव्यं विद्यते। तत्र कथानकस्याभावः पूर्णरूपेण विद्यते। खण्डकाव्ये नायकसम्बद्धस्य कथानकस्यायोजनमावश्यकम्। नायकस्य न हि सम्पूर्णं जीवनवृत्तम्; अपि तु तस्य जीवनस्य घटितैका घटना तत्र वर्ण्यते[1]। कथानकं विनैव ऋतुवर्णनं कुर्वता कविवरेण ऋतुसंहारस्य ग्रथनं कृतम्। मेघदूतखण्डकाव्यस्य कथानकेऽपि निरङ्कुशत्वं दृश्यते। तत्र निरङ्कुशो यक्षो निरङ्कुशं मेघं दूतकार्यार्थं प्रेषयति। तत्राचेतनन्य मेघस्य दौत्यकर्मणि नियुक्तिः कवेर्निरङ्कुशत्वं सूचयति[2]। मेघस्य मार्गवर्णनेऽपि कविवरस्य स्वेच्छाचरणं दृश्यते। पथां वक्रत्वेऽपि मेघमुज्जयिन्याः पौराङ्गनानां लोलापाङ्गैः रमणाय प्रेषयति[3], तत्र पुष्पलावीमुखानां छायादानात् परिचयार्थं कथयतीति[4] निरङ्कुशत्वमेव। काव्यशास्त्रीयमहाकाव्यलक्षणानुसारं रघुवंशमहाकाव्ये कथायोजना नोपलभ्यते। एकस्यैव दिव्यादिव्यस्य धीरोदात्तनायकस्य समग्रं जीवनवृत्तं महाकाव्ये गुम्फितं भवति[5], परमत्रानेके रघुवंशीया राजानो वर्णिताः सन्ति, तेषां वृत्तञ्च सम्पादितमस्ति। महाकाव्येऽस्मिन्नष्टाविंशतिरघुवंशीयराज्ञां चरितं प्रायेण वर्णितमिति रघुवंशनाम्नः सार्थकत्वं प्रदर्शयता कविवरेण निरङ्कुशत्वं प्रदर्शितम्। कुमारसम्भवमहाकाव्ये कुमारस्य कार्तिकेयस्य सम्भव उत्पत्तिर्मूलरूपेण प्रतिपादनीयेति कुमारसम्भवनाम्ना स्पष्टम्। काव्यमिदं कुमारकार्तिकेयस्य सम्भवस्योपक्रमे सम्पन्नं भवति, तत्रापि शङ्करस्येतिवृत्तं प्राधान्येन यदत्रोपस्थापितं तत्तु धार्मिकदृष्ट्या निरङ्कुशत्वफलम्। मूलकथायां यत्र तत्र स्वेच्छया परिवर्तनं स्वप्रयोजनसिद्धौ काव्यशास्त्रीयं काव्यशास्त्रविरुद्धं वा समुपस्थापनं निरङ्कुशत्वव्यञ्जकम्। शङ्करस्य पार्वत्याश्च यादृशं शृङ्गारिकं वृत्तमत्र कुमारसम्भवे वर्णितम्, तत्र निरङ्कुशत्वं किं न दृश्यते[6] ?

नाट्यग्रन्थेषु मालविकाग्निमित्रस्य कथानके मालविकाया उपस्थापनम्, तया सह राज्ञोऽग्निमित्रस्य प्रणयाभिव्यञ्जनम्, तत्र विदूषकस्य बुद्धिवैभवेनाङ्गुलीयकस्य प्राप्तिर्मालविकादर्शनम्, मालविकाया मिलनम्, विवाहे धारिण्याः स्वीकृतिः-प्रभृतीनि वृत्तानि कवेर्निरङ्कुशत्वं सूचयन्ति। विक्रमोर्वशीये राज्ञः पुरुरवस उर्वश्या सह प्रेमाभि-

१. "खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च"। (सा० द० षष्ठपरिच्छेदे)

२. मेघ० १।५; ३. तत्रैव—१।२७; ४. तत्रैव—१।२६; ५. काव्यादर्शे (दण्डी)।

६. (कुमारसम्भवे अष्टमसर्गे द्रष्टव्यम्) - आनन्दवर्धनादिभिराचार्यैः देव्याः सम्भोगवर्णनं मर्यादाहीनं मत्वा कालिदासस्य दोषः स्वीकृतः। (ध्वन्यालोके—१४७ पृष्ठे)।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

व्यञ्जनं देवसभायां लक्ष्मीस्वयंवरनाटके उर्वश्या पुरुषोत्तमस्य स्थाने पुरुरवसो[1] नामकथनं कुमारस्यायुषो बाणेन[2] परिचयादीनि वृत्तानि तथाविधानि सन्ति। अभिज्ञानशाकुन्तले निरङ्कुशस्य राज्ञो दुष्यन्तस्य तापसकन्याभिः सह वार्तालापस्तत्र शकुन्तलया सह प्रेमप्रकाशनं शकुन्तलायाः पित्र्यनुमतिं विना गान्धर्वेण विधिना विवाह[3]-स्तस्या गर्भधारणं महर्षिणा दुर्वाससा[4] शापप्रदानमङ्गुलीयकस्योपाख्यानादीनि वृत्त-विशेषाणि कवेर्निरङ्कुशत्वसूचकानीति।

**चरित्रविधाने निरङ्कुशत्वम् —**

चरित्रविधानं काव्यस्य महत्त्वपूर्णमङ्गं विद्यते। चरित्रविधानदृष्ट्या कविवरस्य काव्यानां परिशीलनेन प्राप्यते यद् ऋतुसंहारखण्डकाव्ये चरित्रस्याभावो दृश्यते। कोऽपि नायको प्रियां सम्बोधयन् खण्डकाव्ये ब्रूते—

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये॥
(ऋतु० १।१)

'प्रिये' इति सम्बोधनपदेनैव चरित्रविधानस्य कार्यं सम्पन्नम्, महाकविना नान्येषां पात्राणां समुपस्थापनं कृतमिति निरङ्कुशत्वं स्पष्टमेव। मेघदूते मेघस्य दूतत्वे, तस्य पात्रत्वे, तेन सन्देशप्रेषणे, देवयक्षमनुष्यपशुपक्षिप्रभृतिचरित्रस्योपस्थापने च महाकवे-र्निरङ्कुशत्वं प्रतीयते। महाकालमन्दिरे नृत्यायोजने भक्तिभावपूर्णाया वेश्याया नखभिन्नस्याङ्गस्य सङ्केते किं न दृश्यते निरङ्कुशत्वम्[5] ?

कुमारसम्भवमहाकाव्ये भगवतः शङ्करस्य जगन्मातुर्भगवत्याश्च चित्रणे किं न प्रदर्शितं निरङ्कुशत्वम् ? शङ्करस्य ध्यानभङ्गे कामदेवेन साधितानि सञ्चालितानि वा शरांसि, ध्यानभङ्गे सति परिलुप्तधैर्यः शङ्करो बिम्बफलाधरोष्ठे उमामुखे विलोचनानि व्यापारयामासेति कथनम्[6], तपस्याकाले पार्वत्यास्तपोवर्णने—"पयोधरोत्सेधनिपात-चूर्णिता...[7]" इति शृङ्गारपूर्णं प्रकाशनं जगन्मातुः कृते कीदृशं वर्तते? पुनश्च सामान्यनायकनायिकयोरिव भगवतः शङ्करस्य जगन्मातुः पार्वत्याश्चोद्दामशृङ्गारवर्णनं कुमारसम्भवस्याष्टमे सर्गे सम्पादितम्। कुमारसम्भवे किमेतादृशस्य चरित्रस्योपस्थापनं समीचीनं वर्तते? पुनश्च तत्रासमये वसन्तागमने पशुपक्षिकीटादीनां क्षुद्रजन्तूनामपि कामाभिव्यञ्जनं निरङ्कुशतायाः प्रतिफलम्[8]। रघुवंशमहाकाव्ये रघुवंशीयराज्ञां चित्रणे

---

१. विक्र० ४।३७० पृष्ठे; २. तत्रैव—५।४१३ पृष्ठे; ३. अभि० ३।२०।
४. तत्रैव—४।१। ५. मेघ० १।३५; ६. कुमा० ३।६७।
७. तत्रैव— ५।२४; ८. तत्रैव—३।३५-३७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

काव्यशास्त्रविरुद्धे नायकनायकादीनां पात्राणां समुपस्थापनेऽपि निरङ्कुशत्वं वर्तते। महाकाव्ये यत्रैकस्य धीरोदात्तनायकस्य कथा वर्णिता भवति, तत्रानेके धीरोदात्तराजानस्तेषां कथाश्च वर्णिताः सन्ति। अत्रैव सिंहोऽपि ब्रूते, गौरपि ब्रूते[1]।

मालविकाग्निमित्रे पूर्वपत्नीभ्यां सहितस्याग्निमित्रस्य मालविकया सह विवाहो गणदासहरदत्तयोर्गर्वहरणं विदूषकस्य बुद्ध्याङ्गुलीयकस्य प्राप्तिर्मालविकादर्शनं रहसि राज्ञा मालविकाप्रेक्षणमेतानि कर्माणि चरित्रयोजने निरङ्कुशतायाः फलानि सन्ति। यद्यपि बहुवल्लभा राजानो भवन्तीति श्रूयते, परमनेनैव मार्गेण वल्लभाया उपस्थापनं कवेः स्वातन्त्र्यस्य फलम्। विक्रमोर्वशीये उर्वश्या उपस्थापनम्, पुरुरवसः प्रणयसाफल्यम्, तस्य पुत्रस्यायुषश्च्यवनाश्रमे परिपालनम्, देवमानवयोः सम्बन्धः प्रभृतीनि कार्याणि चरित्रायोजने तथाविधानि सन्ति। पूर्वपत्न्या युक्तेऽपि उर्वश्याः कृते राज्ञो योगदानं निरङ्कुशत्वं प्रकटयति। अभिज्ञानशाकुन्तले दुष्यन्तस्य चरित्रचित्रणे, अङ्गुलीयकोपाख्यानस्यायोजने, दुर्वाससः शापप्रदाने[2] स्वच्छन्दता दृश्यते। तथा च कण्वशिष्याभ्यां राज्ञः प्रताडनम्[3], दुष्यन्तस्य स्वच्छन्दविचरणम्, शकुन्तलाया गान्धर्वविवाहस्य पित्र्यनुमतिं विना प्रदर्शनं[4] निरङ्कुशत्वसूचकमेव। स्त्रीणां विषये राज्ञः कथनं द्रष्टव्यम्—

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥ (अभि० ५।२२)

अत्र स्त्रीणामुपरि कीदृशो भावः प्रदर्शितोऽनेन कविवरेण राज्ञो माध्यमेनेति तस्य स्वातन्त्र्यम्। अनेन स्पष्टं प्रतीयते यत् काव्यनाटकादौ देवमनुष्ययक्षासुरपशुपक्षिप्रभृतिचरित्रस्योपस्थापने नितरां निरङ्कुशो महाकविकालिदासः स्वेच्छया काव्यप्रतिभया च चरित्रविधाने परिवर्तनं नायकादीनां प्रमुखपात्राणां दोषापनयने तेषामुत्कर्षोपस्थापनायां च नितरां निरतो दृश्यते।

**सूक्तियोजनायां निरङ्कुशत्वम्—**

सूक्तिशब्दः 'सु + उक्तिः' इति विग्रहेण सुष्ठु शोभना उक्तिः सूक्तिरिति। सूक्तिर्यथार्थस्य सत्यस्य कटुसत्यस्य शोभनसत्यस्य व्यङ्ग्यस्य च द्योतिका भवति। काश्चन सूक्तयो नीतिपराः, काश्चन उपदेशपराः, काश्चन व्यङ्ग्यबोधिकाः, काश्चन कटूक्तयो भवन्ति। सुभाषितमपि सूक्तिशब्दस्य पर्यायभूतम्। सुभाषितस्य माधुर्यं नितरां वर्णनीयम्—

---

१. रघु० २।३३,६२; २. अभि० ४।१।
३. तत्रैव—५।२५; ४. तत्रैव—३।२०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
सुभाषितरसस्याग्रे सुधा भीता दिवंगता ॥

( सुभाषितभाण्डागारे )

सामान्यसत्यस्य प्रकाशनं तु कवीनां सामान्यं कर्म, परं कटुसत्यस्य प्रकाशनं तेषां विशिष्टकर्मेति । कटुसत्यस्य व्यङ्ग्यस्य च प्रकाशनं निरङ्कुशानां कार्यम् । कालिदासः कटुसत्यस्य व्यङ्ग्यस्य च प्रकाशने सर्वथा समर्थः, येन कथयितुं शक्यते यदत्र तस्य निरङ्कुशत्वमेव वर्तते । यद्यपि महाकविना बाणभट्टेन कालिदासस्य सूक्तिविषये प्रतिपादितं यन्मधुरसान्द्रासु मञ्जरीष्विव कालिदासस्य सूक्तिषु कस्य प्रीतिर्न जायते[1] । वस्तुतः पश्यामो वयं यद् यत्र कुत्र निर्गता कालिदासस्य सूक्तिर्दर्शयति दोषं प्रकटयति विरोधं विरोधिचरित्रं प्रति परम्परां प्रति समागतदोषं प्रति च । कटूक्तयोऽपि श्रेयस्कार्ये विहिता भवन्ति सूक्तयः । कालिदासस्य नानाविधसूक्तिषु निरङ्कुशत्वं दर्शनीयम् ।

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे[2] ॥

अनेन कथनेन प्रतीयते यद् विरहपीडितानां जनानां वर्षाकाले मेघदर्शने सति विरहानुभूतिरतीवप्रबला जायते । अथ 'कण्ठाश्लेषः' इति कथनेन निरङ्कुशत्वं व्यज्यते । पुनश्च—'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु'[3] इत्यनेन सप्रमाणं मेघस्य दौत्यं समर्थयति कविवरः । निरङ्कुशः कविकालिदासश्चेतनाचेतनेषु प्रकृतिकृपणस्य कामार्तयक्षस्य दूतचयनं समर्थयति । पुनश्च चेतनाचेतनेषु प्रकृतिकृपणः कविः कुमारसम्भवे "कुसुमैकपात्रे स्वां प्रियामनुवर्तमानो द्विरेफो मधु पपौ[4]" इत्यादि कथनेन क्षुद्रकीटेष्वपि शृङ्गारस्य दशां पश्यति, किं पुनः विरहे त्रिभुवनं तन्मयं पश्यतीति ।

"याच्ञामोघा वरमधिगुणे नाऽधमे लब्धकामा[5]" इति मेघदूते राज्याश्रितस्यापि कालिदासस्य स्वाभिमानो ब्रूते । कवयो याचका न भवन्ति, पुनश्चाधमेषु याच्ञा कदापि न कार्येति व्यञ्जनम् । तत्रैव—

"ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः"[6] ।

एतादृशानि वाक्यानि सम्भोगाश्रितानि सम्भोगव्यञ्जकानि अश्लीलत्वसम्पन्नानीति निरङ्कुशत्वं दृश्यते ।

---

१. निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥ (हर्षचरिते)

२. मेघ० १।३ ; ३. तत्रैव—१।५ ; ४. कुमा० ३।३६ ; ५. मेघ० १।६ ।

६. तत्रैव-१।४१ (परमार्थसुधा-(वाराणसी)प्रवेशाङ्के "मेघदूते अश्लीलत्वारोपः" इति विषये मेघदूतांशस्यास्यानेकेऽर्था मया विहिताः ) ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

"के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः"[१]।

अनेन सूक्तिवचनेन निर्भयः कालिदासस्तादृशानां पुरुषाणां कृते उपदेशं प्रयच्छति। निष्फलारम्भयत्नाः पुरुषा अन्ये वा प्राणिनोऽवश्यमेव परिभवपदं प्राप्नुवन्तीति।

"वित्तेशानां न खलु वयो यौवनादन्यदस्ति"[२]।

अनेन राज्ञां धनाढ्यानां पुरुषाणाञ्चालोचना प्रतिपादिता, यतो हि एतादृशाः पुरुषा धनोपभोगेन यौवनस्था एव भवन्ति। अनेन प्रकारेण मेघदूते नानाविधाः सूक्तयः सन्ति।

कुमारसम्भवे—"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" (२।५५) इत्यनेन स्वसम्पादितं कार्यं प्रति आसक्तिः प्रदर्शिता। "न धर्मवृद्धेषु वयः समीक्ष्यते" (कु० ५।१६) अनेन कथितं यन्न केवलं वयसा कोऽपि महान् भवति; अपि तु गुणेन महान् भवतीति समर्थयन् निरङ्कुशः कविः ब्रूते यद् बालोऽपि धर्मवृद्धो ज्ञानवृद्धः कलाप्रवीणश्च महान् भवति। अनेन प्रतीयते कालिदासीया अनेकेः सूक्तयः कुमारसम्भवे।

रघुवंशमहाकाव्ये—"महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः" (२।५०) अनेन राज्यपदस्य महत्त्वं तस्य कृते आसक्तिश्चेति प्रदर्शितम्।

"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्" (माल० १।२) अनेन नवीनविचारधारायाः समर्थनं कविवरेण कृतम्। नवीनोऽपि मार्गोऽनुसरणीयो भवति। अन्धानुकरणमेव सर्वदा नोचितमिति। अत्रैव कालिदासस्य स्वाभिमानो ब्रूते—"अन्यसमाधिभीरुत्वं देवानाम्" (अभि० १।४० पृष्ठे)। देवानां दोषदर्शने संलग्नो महाकविस्तेषामन्यसमाधिभीरुत्वं प्रकटयति। सर्वशक्तिसमन्विता देवा मानवानां समाधिं दृष्ट्वा बिभ्यति, मम पदमपहृतं न स्यादिति हेतोः। 'प्रिया अप्रिया वा प्रमदा स्वबन्धुभिः'[३], भयहीनः कण्वशिष्यः शार्ङ्गरवो राजानं दुष्यन्तं कथयति यत् प्रमदाः स्वबन्धुभिः प्रिया अप्रिया वा भवन्ति। अत एवेयं तव समीपे इष्यते। "मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु"[४] अत्र राजानं दुष्यन्तं प्रति निरङ्कुशस्य कविवरस्य कथनमस्ति यत् प्रायेणैश्वर्यमत्तेषु असत्कल्पप्रसङ्गादयो विकारा मूर्च्छन्ति। 'पात्रीकृतो दस्युरिवासि येन'[५] अनेन कथनेन कविवरो राज्ञो दुष्यन्तस्य दस्युरिवाचरणं कथयित्वा तस्य भर्त्सनां करोति। पुनश्च—

आ जन्मनः शाठ्यमशिक्षितो यस्तस्या प्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः[६]॥

---

१. मेघ० १।५४; २. तत्रैव—२।३; ३. अभि० ५।१७।
४. तत्रैव—५।१८; ५. तत्रैव—५।२०; ६. तत्रैव—५।२५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

व्यङ्ग्येनानेन वने निवसतां जनानां वचने प्रामाण्यं तथा राजपुरुषाणां राज्ञां वा वचनेऽप्रामाण्यमिति सङ्केतो गृह्यते। यो हि वने निवसन् जन्मनः प्रभृति शाठ्यमशिक्षितस्तस्य वचने अप्रमाणम्, तथा यो हि शाठ्याचार्यस्तस्य वचने प्रामाण्यमिति राज्ञां समक्षे निरङ्कुशत्ववचनं कटुसत्यवचनं कविना समुपस्थापितम्। पुनः—

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ (५।२६)

अत्र प्रभुता सर्वतोमुखीति प्रतिपादयता निरङ्कुशेन कविना तस्य राज्ञो निरङ्कुशत्वं सूचितम्। 'पतिकुले तव दास्यमपि क्षमम्'[1] अनेन शकुन्तलां प्रति सामान्यवधुं प्रति वा कटुवचनं समुपस्थापितं यत् पतिकुले स्त्रीणां दास्यमपि क्षमं भवति। त्वयापि यथा तथाऽत्रैव स्थातव्यम्। अत्र दास्यमपि त्वया स्वीकरणीयमिति निरङ्कुशवचनम्।

एतासु सूक्तिषु महाकवेर्निरङ्कुशत्वं दृश्यते, न तु दोषः। कथनमिदं सर्वथोचितं भविष्यति यत्—"तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवति[2]"।

**शब्दप्रयोगे निरङ्कुशत्वम् —**

शब्द प्रयोगे कवीनां निरङ्कुशत्वं विविधकारणाद् दृश्यते। तत्र शब्दानां तादृशं रूपं तदा प्रयुक्तं स्यात् किं वा पूर्वेषां कवीनां काव्ये तेषां शब्दानां प्रयोगो दृष्यते, किं वाऽनेकेषां वैयाकरणानां मतेन शब्दानां सिद्धिः स्यात्, किं वा पद्यरचनायां भावनिर्वाहे कोमलपदविन्याससंरक्षणे नियमस्योल्लङ्घनं भवेत्, सर्वं निरङ्कुशत्वमेव। कालिदासेन स्वकाव्येषु शब्दानामेतादृशः प्रयोगः कृतः, यादृशः प्रयोगः पाणिनेर्व्याकरणनियमेन सङ्गतो न विद्यते।

"लावण्य उत्पाद्य इवास यत्नः"[3], "तेनास लोकः पितृमान् विनेत्रा"[4] इत्यादौ 'आस' इति क्रियापदस्य स्वतन्त्रप्रयोगो दृश्यते, परं पाणिनेः "अस्तेर्भूः[5]" इत्यनेन सूत्रेण 'अस्'धातोर्भूतकाले निष्पन्नम् 'आस'–क्रियापदं स्वतन्त्ररूपेण प्रयुक्तं न भवति। पुनश्च अस्धातोर्लिटि 'अस्तेर्भूः' इत्यनेन 'बभूव' इति भवति, न तु 'आस' इति। एवमेव—"तं पातयां प्रथममास पपात पश्चात्",[6] "प्रभ्रंशयां यो नहुषं चकार"[7] प्रभृतिपद्येषु 'पातयाम् + आस' एवं 'प्रभ्रंशयां + चकार' इति खण्डितप्रयोगा विद्यन्ते। लौकिकसंस्कृते पातयामास, प्रभ्रंशयाञ्चकार-प्रभृतीनि क्रियापदानि अखण्डितान्येव

---

१. अभि० ५।२७;    २. कालिदास—(मिरासी) २२४ पृष्ठे।
३. कुमा० १।३५;    ४. रघु० १४।२३;    ५. अष्टा०-२।४।५२।
६. रघु०-९।६१;    ७. तत्रैव—१३।३६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवन्तीति मुनेः कात्यायनस्य मतम्। परमुपर्युक्ते प्रयोगे कालिदासस्य निरङ्कुशत्वं दृश्यते। एवमेव "संयोजयां विधिवदास समेतबन्धुः"[१] इत्यत्रापि 'संयोजयाम्+आस' इति खण्डितप्रयोगो दृश्यते। अनेन प्रकारेण स्पष्टं भवति यद् व्याकरणनियमविरुद्धा अपि शब्दाः कालिदासस्य काव्येषु प्रयुक्ताः सन्ति। क्रियापदस्यैतादृशाः प्रयोगा वेदेषु प्राप्यन्ते। वैदिकमार्गमनुसरता कविना कालिदासेन लौकिकसंस्कृते मान्यानां प्रचलितानां व्याकरणसम्मतप्रयोगाणां बन्धनं शिथिलं कृत्वा निरङ्कुशत्वं दर्शितम्। अत्रेदमपि ध्यातव्यमस्ति यत् तादृशाः प्रयोगा वाल्मीकि-व्यासप्रभृतिकविवराणां काव्येष्वपि प्राप्यन्ते। पुनश्च शब्दप्रयोगे शिथिलबन्धत्वं भावरक्षणे पदलालित्ययोजनायाञ्च तेन स्वीकृतमिति निरङ्कुशत्वम्।

**रसनिरूपणे निरङ्कुशत्वम् —**

काव्येषु रसनिरूपणं शरीरेषु हृदयस्थापनमिव महत्त्वपूर्णमानन्ददायकञ्च भवति। रसं विना काव्यस्य महत्त्वं नितरां महत्त्वहीनं भवति। महाकाव्येषु करुण-वीर-शृङ्गारेष्वेकस्य रसस्य प्राधान्यमन्येषाञ्चाप्राधान्यं भवतीति काव्यशास्त्रीयो विचारः। नाटकेष्वपि तादृशमेव रसनिरूपणं प्रशस्तम्।

महाकविकालिदासः शृङ्गाररसस्य सम्राट् विद्यते। महाकविजयदेवेनापि कथितमस्ति--

"भासो हासः कविकुलगुरुः कालिदासो विलासः"। ( प्रसन्नराघवे )

कालिदासस्य सर्वेषु काव्येषु नाट्यग्रन्थेषु च शृङ्गाररसस्य प्राधान्यं दृश्यते। वीररसप्रधानेऽपि रघुवंशमहाकाव्ये शृङ्गाररसस्य स्थानं महत्त्वपूर्णं दृश्यते। परं रसनिरूपणेऽपि कविना निरङ्कुशत्वं प्रदर्शितम्। "ज्ञातस्वादो विवृतजघनां को विहातुं समर्थः"[२], "नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत्"[३], "पयोधरोत्सेधनिपात-चूर्णिता"[४]-प्रभृतिस्थलेषु अश्लीलत्वयुक्तस्योत्कटशृङ्गारस्य वर्णनं कुर्वता तेन निरङ्कुशत्वं सूचितम्। कुमारसम्भवे त्रैलोक्यपूज्ययोः शिवपार्वत्योः सम्भोगवर्णनं सर्वथाङ्कुशहीनत्वमेव। रघुवंशमहाकाव्येऽग्निमित्रस्य सम्भोगवर्णनं शृङ्गारोपकारकम्, तथापि उद्दामशृङ्गारयुक्तत्वे सति अश्लीलत्वे सति च तस्य निरङ्कुशत्वमेव प्रमाणयति। शृङ्गारोद्दीपने—"वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः"[५] इति कथयित्वा शृङ्गारानुकूलमुद्दीपनं तेन नैव प्रकटितम्। तत्रैव "पराङ्मुखी विश्वसृजः प्रवृत्तिः" इति कथनं निरङ्कुशत्वसूचकम्। कुमारसम्भवस्य तृतीये सर्गे वसन्तस्य वर्णनं कुर्वता कालिदासेन शृङ्गारोद्दीपनाय सर्वमुपपादितम्, परं कामदहनानन्तरं शृङ्गारा-भ्यन्तरे चतुर्थे सर्गे रत्या विलापं संयोजयता यत् कारुण्यमुपस्थापितं तत् शृङ्गारस्य

१. रघु० १६।८६; २. मेघ० १।४३; ३. रघु० ४।५२।
४. कुमा० ५।२४; ५. तत्रैव—३।२८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सहायकं नास्तीति निरङ्कुशत्वमेव। मन्ये, कुमारसम्भवस्य नायिकां पार्वतीं तपसि नियोजनाय तस्याः समक्षमेव कामदहनदृश्यमुपस्थापितम्। पुनश्च भवतु नाम कालिदासस्य जीवने तादृशं महत्त्वमुद्दामश्रृङ्गारस्य परं काव्ये तादृशमुद्दामवर्णनं तस्य निरङ्कुशत्वमेव।

**प्रकृतिचित्रणे निरङ्कुशत्वम्—**

मेघदूते प्रकृतिभूतस्य मेघस्य दूतकर्मणि नियुक्तिस्तेन[1] प्रेषणादिकं कार्यं निरङ्कुशत्वसूचकं वर्तते। अचेतनो मेघोऽलकां यावत् पुरुषसदृशो गच्छति, पुरुषस्येव कार्याणि च सम्पादयति। मेघो वेत्रवत्याः पयः सभ्रूभङ्गं मुखमिव पिबति,[2] विरहस्थ-कामिनीनां कृशतां[3] हरतीत्यादीनि कर्माणि तादृशान्येव। अस्थाने गङ्गा-यमुनयोः संगमः[4], एकस्मिन्नेव काले षण्णामृतूनामुपस्थितिः किं निरङ्कुशत्वं न सूचयति[5]? अलकायां वधूनां हस्ते लीलाकमलम्, अक्षके बालकुन्दानुविद्धम्, आनने लोध्रप्रसव-रजसा श्रीः पाण्डुतां नीता, चूडापाशे नवकुरबकं कर्णे चारुशिरीषं सीमन्ते च मेघोपमजं नीपं सर्वदैवोपस्थितानि भवन्ति। ज्ञातव्यमस्ति यत् शरदि कमलस्य, हेमन्ते लोध्र-पुष्पस्य, शिशिरे कुन्दपुष्पस्य, वसन्ते कुरबकस्य, ग्रीष्मे शिरीशपुष्पस्य, वर्षायां कदम्बपुष्पस्य विकासो भवति, परं निरङ्कुशः कविरेकत्रैव एकस्मिन् समये सर्वाणि पुष्पाणि समुपस्थापयति। कुमारसम्भवे पार्वत्यास्तपोभूमौ एकत्रैव विरोधिनो जीवा निवसन्ति[6]। कवेः काव्यसंसारे सृष्टिप्रक्रिया विचित्रा भवति। असमये वसन्तस्या-गमनं काव्यजगति सम्भवम्, न हि ब्रह्मणः सृष्टिभूमौ लोके वा। अनेनैव एकस्मिन्नेव स्थले षण्णामृतूनां समवायः काव्ये सम्भवति, न तु अन्यत्र। प्रकृतिपुरुषा अचेतना अर्धचेतना वा भवेयुः कालिदासस्य काव्येषु ब्रुवन्ति, कालिदासस्य सङ्केतेन गच्छन्ति, खादन्ति, पिबन्ति, नृत्यन्ति, विविधां श्रृङ्गारिकीं क्रियाञ्च सम्पादयन्तीति तस्य निरङ्कु-शत्वं स्पष्टम्। विक्रमोर्वशीये लता उर्वश्या रूपं दधाति, मणिः सङ्गमं प्रापयति[7]। अभिज्ञानशाकुन्तले वनस्पतिभ्यः कुसुमान्याहरणे तेभ्यो आभरणानि प्राप्यन्ते[8], लता अश्रूणि मुञ्चन्ति[9]। मालविकाग्निमित्रे मालविकायाः पादप्रहारेणाशोकवृक्षे कुसुमोद्-गमो[10] भवतीत्यादि-प्रकृतिचित्रणे तस्य निरङ्कुशत्वं स्पष्टमेव।

निष्कर्षतः कथनमिदमसत्यं न भविष्यति यत् कालिदासेन स्वकाव्येषु स्वेच्छया-चरितम्। निरङ्कुशाः कवय इति कथनेन यद्यपि सर्वे कवयो निरङ्कुशा भवन्ति; परं तेषु कालिदासस्य निरङ्कुशत्वमत्यधिकं वर्तते। काव्यतत्त्वाभिनिवेषणे, काव्य-

१. मेघ० १।५; २. तत्रैव—१।२४; ३. तत्रैव—१।२९।
४. तत्रैव—१।५१; ५. तत्रैव—२।२; ६. कुमा० ५।१७।
७. विक्र० ४।३८; ८. अभि० ४।५; ९. तत्रैव—४।१२।
१०. माल० ३।१२।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

शास्त्रीयमार्गानुसरणे, कथायोजनायाम्, चरित्रविधाने, रसप्रयोगे, शब्दगुम्फने, प्रकृतिचित्रणे सर्वत्रैव कवेरस्य विशिष्टा स्वच्छन्दता दृग्गोचरीभवति। महाकवेः काव्येषु पारम्परिकतायाः परिपालनं सर्वत्र न दृश्यते। "पुराणमित्येव न साधु सर्वम्" इति कथयता तेन नवीनाया विचारधाराया यत् समर्थनं कृतम्, तत्तु निरङ्कुशत्वमेव। तत्र स्वकीयं विचारं प्रकटयता तेन स्वेच्छयाचरितम्। कवेरादर्शस्य स्थापनायां यानि बन्धनानि विरोधीनि भवन्ति, तानि सर्वाणि कविभिः शिथिलीक्रियन्ते। सत्यमेव कथ्यते—

अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥

अतः काव्यसंसारे परिवर्तनं कवेरादर्शानुकूलमादर्शस्य स्थापनायां स्वीक्रियते। यथा कज्जलं कामिनीनां नेत्रयोर्भूषणं भवति, न तु दूषणम्, तथैव निरङ्कुशत्वमपि कालिदासस्य भूषणमेव, न तु दूषणम्। कवेरस्य निरङ्कुशत्वं सत्यप्रकाशकत्वं निर्भीकत्वं क्रान्तप्रज्ञत्वं नवीनमूल्यानां स्थापकत्वं प्रयोजनयुक्तत्वञ्च प्रकाशयतीति दिक्।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# चमत्कारप्रस्थानम्*

**डॉ० रमाशङ्करमिश्रः**

अध्यक्षः, संस्कृत-विभागस्य

प्रतापगढस्थमुनीश्वरदत्तस्नातकोत्तरमहाविद्यालये



काव्यशास्त्रे हि प्रमुखानि सप्त प्रस्थानानि समुल्लसन्ति—(क) रसप्रस्थानम्, (ख) अलङ्कारप्रस्थानम्, (ग) रीति-गुणप्रस्थानम्, (घ) ध्वनिप्रस्थानम्, (ङ) वक्रोक्ति-प्रस्थानम्, (च) औचित्यप्रस्थानम्, (छ) चमत्कारप्रस्थानञ्चेति।

समेष्वपि प्रस्थानेषु कश्चनापि पारस्परिकस्तु सम्बन्धः संश्लिष्यत एवेति काव्यचारुत्वमेवैषां सामान्यं वस्तुतत्त्वमिति निर्णीयते। सम्प्रति तु चमत्काराख्यं प्रस्थानमेवाधिकृत्य वचोगुम्फो वितन्यते।

विविधैर्भरत - वामनानन्दवर्धनाभिनवगुप्त - मम्मटादिभिश्चिरन्तनैराचार्यवर्यैः काव्यशास्त्रालोचनप्रसङ्गे विवृतं चमत्कारमहिमविवेचनमाधृत्य कैश्चन परवर्तिभिराचार्यैः चमत्काराख्यं नव्यतमं प्रस्थानमपि प्रवर्तितमिति। यथा हि पाकशास्त्रतो मधुराम्ल-लवणादि-लौकिकरससमास्वादनं गृहीत्वा काव्यशास्त्रे रसानुभूतिर्गृहीतादरा विजृम्भतेतराम्, तथैव 'चमत्कार'-शब्दोऽपि पाकशास्त्रीयाद् आस्वाद्यवस्तुसमास्वादन-परवर्तिनः 'चमच्चमद्' इत्यधरोद्भूताच्छब्दानुकारात् प्राप्तजन्मा काव्यशास्त्राजिरमुपेतः।

वस्तुतस्तु वक्रोक्तिप्रस्थानस्यैव विशालतमं क्रोडम्, रसस्य ध्वनेर्वा प्रासादस्य उच्चतमं तलं च समारोहतितरां चमत्कारवादोऽयं किल। अत एव डॉ० राघवन्-महोदयेन, डॉ० भोलाशङ्करव्यासेन, आचार्यबलदेवोपाध्यायेन, गणेशत्र्यम्बक-देशपाण्डे-महोदयेन, अन्यैश्च काव्यशास्त्रसमीक्षकैरयं चमत्कारवादः सोत्साहं विवृतः[1]।

---

* आचार्यबलदेवोपाध्यायेन षट् प्रस्थानानां साहित्योपयोगित्वं भारतीयसाहित्यशास्त्रे निरूपितम्। डॉ० राघवन्महोदयेन सप्तमं चमत्कारप्रस्थानमपि स्वीकृतं प्राच्य-साहित्यालोडनेन।

१. "Dr. Raghawan – "Some concepts of Alankarshastra", P.270 etc, डॉ० भोलाशंकरव्यासः—'ध्वनिसम्प्रदायः', भागः–१, पृ० ४५३-५५, बलदेवोपाध्यायः–भारतीयसाहित्यशास्त्रे, भागः–२, पृ० २६१-७०, गणेश–त्र्यम्बक–देशपाण्डे—भारतीयसाहित्यशास्त्रे ( मराठी-पुस्तके ), पृ० ११६–१७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अलङ्कारपथपथिकैराचार्यैरपि अलङ्काराणामलङ्कारत्वं चमत्कारसारमूलमेव विवेचितम्। चमत्कारप्राणसञ्चारेणैव अलङ्कारेषु आकर्षकता सजीवता च सन्नद्धायते, नान्यथा[1]। सर्वतः प्राग् आनन्दवर्धनेनैव काव्यास्वादरूपे महनीयेऽर्थे चमत्कारशब्दः प्रयुक्तः। चमत्कारवाचो चमत्कृतिशब्दः[2]। काव्यास्वादस्य मूलबीजं तु चारुत्वमेव। अयञ्च चारुत्वशब्दो ध्वनिकृता लोचनकृता च बहुशो बहुधा च बहुत्र सम्मतः प्रयुक्तश्च। अथैतच्चारुत्वं चमत्कारापरपर्यायमेव वेदितव्यम्, यद्धि रस-सौन्दर्ययोः सामञ्जस्यपिशुनम्, वस्तु-व्यक्त्योः संयोगमूलम्, प्रमातृ-प्रमेययोः सन्धान-केन्द्रञ्च विभाति। इदमेव चारुत्वं जनकं चमत्कारस्य, तस्य पूर्वरेखाङ्कनकारि च। वस्तुतोऽयं चमत्कारः 'सौन्दर्य-रसे'त्युभयनामान्तरेणापि सम्बोधयितुं शक्यते। दृश्यते हि चमत्कार-चारुत्वयोः समानार्थकः प्रयोगः काव्यशास्त्रग्रन्थेषु। अभिनवगुप्त-पादेनापि चमत्कारजननमेव रससर्वस्वं रसस्यापि जीवितमिति च तत्र तत्र निरूपितम्—

(क) आस्वादयितॄणां हि यत्र चमत्काराविघातः, तदेव रससर्वस्वं स्वादायत्तत्वात् ( लोचने, पृ० ३४६ )।

(ख) यद्यपि च रसेनैव सर्वं जीवति काव्यम्, तथापि तस्य रसस्य एकघन-चमत्कारात्मनोऽपि कुतश्चिद् अंशात् प्रयोजकीभूतादधिकोऽसौ चमत्कारोऽपि भवति। ( लोचने, पृ० ६५, भारतीयसाहित्यशास्त्रे आचार्यबलदेवोपाध्यायकृते प्रथमे भागे, पृ० ३६२ )।

अभिनवगुप्तशिष्यः क्षेमेन्द्रोऽपि काव्यस्य मुख्यं तत्त्वम् उदीरयति चमत्कारमेव। स निरूपयति यत् चमत्काराद् ऋते सुन्दरपदशय्यासमारूढं काव्यरत्नमपि न रोचकायते। काव्यजीवितरूपः सोऽयं चमत्कारो दशविधः—१. अविचारितरमणीयः, २. विचार्यमाणरमणीयः, ३. समस्तसूक्तव्यापी, ४. सूक्तैकदेशदृश्यः, ५. शब्दगतः, ६. अर्थगतः, ७. शब्दार्थगतः, ८. अलङ्कारगतः, ९. रसगतः, १०. प्रख्यातवृत्तगतश्च। एतेषां दश-चमत्कारविधानां निदर्शनं सविवेचनं कविकण्ठाभरणे प्राप्यते[3]।

---

१. काव्यात्म-मीमांसा ( डॉ०जयमन्तमिश्रः ), पृ० १४१-१४२।

२. 'इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी। सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः" ॥ ( ध्व०, ३।१९ कारिकातः परम् )

३. क्षेमेन्द्रस्य चमत्कारानुरागो वीक्ष्यताम्—

'एकेन केनचिदनर्घमणिप्रभेण काव्यं चमत्कृतपदेन विना सुवर्णम्।
निर्दोषलेशमपि रोहति कस्य चित्ते लावण्यहीनमिव यौवनमङ्गनायाः ॥'

( कविकण्ठाभरणे, ३।२ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आचार्यकुन्तकोऽपि काव्यस्य काव्यशास्त्रस्य च परमं प्रयोजनम् अलौकिकचमत्कारजननमेव मन्वानश्चमत्कारमेव वक्रोक्तिसारं स्वीकरोति[1]। तेन काव्यामृतरसस्य अन्तःसारः काव्यैकजीवितरूपश्च चमत्कारो वर्णितः। तन्निरूपितः सौभाग्याख्यः काव्यगुणोऽलौकिकचमत्कारजनक एव सम्मतः[2]।

अनुमितिवादी व्यञ्जनाविरोधी आचार्यमहिमभट्टोऽपि लक्षणायाः प्रयोजनरूपेंऽशे चमत्कारसारत्वमूरीकरोति, चमत्कारजननशून्याच्च लोकव्यवहारात् काव्यपथं चमत्कारसारं विविनक्ति च। तद्यथा—

'भक्तेः प्रयोजनांशो यश्चमत्कारित्वलक्षणः।
स तत्रास्तीति सोऽप्यस्य विभावाद्येकहेतुकः' ॥ ( व्य० वि० १।४१-४२ )
'अत एव न लोकेऽपि चमत्कारः प्रसज्यते'। ( तत्रैव—१।४२ )

वस्तुतस्तु अद्भुतरसस्य प्राणतत्त्वं विस्मयावेश एव। अयमेव च विस्मयावेशश्चमत्कारो नाम। अत एव आचार्यविश्वनाथोऽद्भुतरसफलितमेव चमत्कारसारं व्यवृणोत्। अयं भावः—रसानां प्राणतत्त्वन्तु लोकोत्तरचमत्कार एव, यो हि अलौकिककाव्यार्थपरिशीलनाभ्यासवशान्निर्मलीभूते सहृदयहृदि प्रवहणशीलो रसधाराविशेष एव, यतो विस्तीर्यमाणमिव मनस्तलं विलसति। अयमेव हृदयविस्तारश्चमत्कारो नाम। स च विस्मयावेशादनन्यः। एष एव च विस्मयावेशोऽद्भुतरसस्य प्रधानं लक्षणम्। वस्तुतः प्रत्येकं रसानामास्वादनावसरेषु एष एव विस्मयावेशो रसिकचित्तं स्वत्व-परत्वसंवेदनाद् विरतीकृत्य रसचर्वणोन्मुखीकरोति[3]। तथा चेदं निर्गलितं यत् चमत्कारापरपर्याय एव विस्मयावेशो नूनमेव सर्वेषां रसानां परा प्रकृतिरिति। अत एव कविराजविश्वनाथस्य प्रपितामहो नारायणः समभिमनुते यत् चमत्कार एव रससारोऽद्भुतरस एव च काव्यस्य परमं जीवितमिति[4]। विश्वनाथोऽपि चमत्कारं चित्तविस्ताररूपं विस्मयापरपर्यायमेव स्वीकुरुते—

---

१. लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये ।
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते ॥' (व० जी० १।२)

२. काव्यामृतरसेनान्तश्चमत्कारो वितन्यते। ( तत्रैव—१।५ )
'सर्वसम्पत्परिस्पन्दसम्पाद्यं सरसात्मनाम्।
अलौकिकचमत्कारकारि काव्यैकजीवितम् ॥ (तत्रैव–१।५६ )

३. साहित्यदर्पणे, तृतीयपरिच्छेदे, पृ० १०५–१०७।

४. 'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥
तस्माददद्भुतमेवाह कृती नारायणो रसम् ॥' ( तत्रैव, पृ० १०६)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः ।' (साहित्यदर्पणे-३)

यद्यपि उपरितनैर्विवेचनैर्ज्ञायते यच्चमत्कारशब्दः सुदूरपूर्ववर्तिभिराचार्यैराद्रियते काव्यस्य परमसाररूपेण; किन्तु सुस्पष्टतया चमत्कारस्य काव्यजीवितत्वसाधनाय प्रबलतर्कसोपानसम्पादनं तु ख्रीष्टाब्दचतुर्दशशतकवर्तिना कविचन्द्रापरनामकेन विश्वेश्वरेण 'चमत्कारचन्द्रिकायां' कृतम् । 'चमत्कार एव काव्यात्मा' इति स्वीयं पक्षं पूर्वजमतपीयूषैरुपजीव्य, चमत्कारं परिपोषयितुमेव कृता तेन कृतिना सैषा कृतिरिति विभाव्यते। तत्र च चमत्कारचन्द्रिकायां चमत्काराख्यस्य काव्यजीवितस्य सप्त सोपानभूततत्त्वानि विशदीकृत्य विवेचितानि—गुणाः, रीतयः, वृत्तयः, पाकः, शय्या, रसाः, अलङ्काराश्चेति[1] । सेयं चमत्कारचन्द्रिका नाद्यावधि प्राकाश्यं गता; किन्तु पाण्डुलिपिरूपे सुरक्षिताऽवतिष्ठते । चमत्कारचन्द्रिकाया विस्तृतं विवरणं डॉ० राघवन्महोदयेन समुपन्यस्तमिति । चमत्काराश्रितञ्च काव्यं त्रिधा—चमत्कारि (शब्दचित्रम्), चमत्कारितरम् ( अर्थचित्रं गुणीभूतव्यङ्ग्यञ्च), चमत्कारितमम् (व्यङ्ग्यप्रधानं) चेति ।

चमत्कारप्रस्थानप्रवर्तकस्य विश्वेश्वरस्य अनुयायिना षोडशशतकभवेन प्रभाकरेणापि काव्यस्य स्वरूपमेव 'चमत्कारविशेषकारित्वं सुखविशेषकारित्वं वा' इति प्रस्थापितम् । अत एव केचन प्रभाकरमेव चमत्कारवादप्रतिष्ठापकं मन्यन्ते[2]' यद्धि 'चमत्कारचन्द्रिका'-पर्यालोचनया निरस्तीकृतम् ।

अष्टादशशतीसमुदितो गङ्गेशसूनुर्हरिप्रसादोऽपि सप्तपरिच्छेदात्मके स्वीये ग्रन्थे 'काव्यालोके' चमत्कारमेव काव्यात्मानं स्वीकृत्य अन्यान् काव्यात्मवादिनः प्रत्युक्तीचकार[3] । पण्डितराजजगन्नाथोऽपि अलौकिकानन्दविशेषमेव चमत्कारनाम्ना व्यवहरन् चमत्कारजनकानामर्थानां शब्दतः प्रतिपादनमेव काव्यं प्राह[4] ।

---

१. 'चमत्कारस्तु विदुषामानन्दपरिवाहकृत् ।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम् ॥
सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः ।' (चमत्कारचन्द्रिकायाम्)
द्रष्टव्यम्–Some Concepts of Alankarshastra : Dr. Raghawan, P. 270.

२. गणेश-त्र्यम्बक-देशपाण्डे —भारतीयसाहित्यशास्त्रे (मराठीभाषायाम्), पृ० ११५-११७ ।

३. 'विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः ।
उत्पत्तिभूमिः प्रतिभा मनागेवोपपादितम् ॥' ( Dr. Roghawan : Some Concepts of Alankarshastra)

४. 'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । लोकोत्तरत्वं च आह्लादगतः चमत्कारापरपर्यायोऽनुभवसाक्षिको जातिविशेषः ।' (रसगङ्गाधरे, पृ० ४, काव्यमालासंस्करणे)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

केचन औचित्यचमत्कारौ ध्वनावेवान्तर्भूतौ मन्यन्ते। केचिच्च वक्रोक्ति-विकसिततत्त्वानुवादिनीमेव चमत्कारवीथीमाहुः। ध्वनिकृत्तु चमत्कारं ध्वनिप्रस्थानीयायाः शब्दार्थगतचारुत्वातिशयानुभूतेः परिणतं नामान्तरमभिप्रैति[1]।

**चमत्कारप्रस्थानस्य ध्वनिप्रस्थाने पर्यवसानम्—**

विश्वेश्वर-प्रभाकरादिभिः प्रवर्तितोऽयं नूतनश्चमत्काराख्यः काव्यात्माऽपि ध्वन्यालोकलोचनयोः समालोचनफलरस एवेति मन्तव्यम्। आनन्दवर्धनेन लोचनकृताऽभिनवगुप्तेन च पदे पदे व्यङ्ग्यार्थबोधनस्थले, शब्दार्थवैचित्र्यनिरूपणस्थले, वस्त्वलङ्कार-रसादि-ध्वनिविवेचनस्थले च चमत्कारशब्दो बहुशः प्रयुक्तः[2]। द्वितीयोद्द्योते च चेतश्चमत्कृतिविधायी काव्यार्थविवेको ध्वनिकृता सम्मतः। चमत्कृतिश्च काव्यास्वादापरपर्याया। ध्वन्यालोकव्याख्यात्राऽभिनवगुप्तेन तु विशेषतो ध्वनिप्रयोन्मीलने रसस्यालौकिकत्वविवरणे च चमत्कारशब्दो बहुशो विततः। ध्वन्यालोके लोचने च बहुत्र निविष्टः चारुत्वशब्दोऽपि चमत्कारनेदीयानेव, यो हि सौन्दर्यरसयोः सामञ्जस्यं पश्यति[3]।

कविराजविश्वनाथस्य प्रपितामहो नारायणोऽपि चमत्कारशब्दं प्रयुङ्क्ते रससारत्वेन, अद्भुतरसाभिन्नत्वेन च[4]। तेन विश्वनाथोऽपि विस्मयापरपर्यायं चमत्कारमङ्गीचकार। परमाह्लादरूपोऽयं चमत्कारो लोकोत्तरानन्दादभिन्न एवेति पण्डितराजो ब्रूते। तथा च वाच्य-वाचक-तत्त्वापेक्षयाऽधिकतरचमत्कारवतां व्यञ्जना-व्यङ्ग्य-व्यञ्जकानां व्याख्यानमादधान एष ध्वनिसम्प्रदाय एव परवर्तिनश्चमत्कार-वादस्य प्रेरणा-सोपानसमुल्लासभूः।

तदित्थं व्यङ्ग्यार्थचमत्कारचय-कनककलश-पीयूष-रसमाधुर्य-सेकप्रवणं प्रासपरिपाकं समुदितसमुदीयमानसमुदेष्यमाणसिद्धान्तविशेषसमुद्गमनकौशलबन्धुरं मधुर-मधुरं काव्यकलैकसुन्दरं सहृदयहृदयप्रतिभापवित्रितप्रीतिपरिलसितं ध्वनितत्त्वमेव काव्यजीवितं वेदितव्यं काव्यपरिशीलनपेशलैरिति शम्।



---

१. ध्वन्यालोके, २।४, पृ० १८९-९०।

२. आस्वादयितॄणां यश्चमत्काराविघातस्तदेव रससर्वस्वम्। (लो०, पृ० ३४६)

३. ध्वन्यालोके, पृ० १४४, १७८ (निर्णयसागर-सं०)।

४. 'रसे सारश्चमत्कारः...तस्माददद्भुतमेवाह कृती नारायणो रसम्' ॥ इति।
(सा० द० ३, पृ० १०६)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# धातुकाव्यसमीक्षणम्

डॉ॰ वनमालीविश्वालः

प्रवक्ता,

गङ्गानाथझा-केन्द्रियसंस्कृतविद्यापीठस्य

प्रयागे

❀ ❀ ❀

## प्रास्ताविकम्

धातुकाव्यमिति काव्यस्य शीर्षकमेव सूचयति यत् समीक्षार्थं प्रस्तुतं काव्यमिदं संस्कृतव्याकरणस्य प्रचलितानामप्रचलितानां च प्रायः सर्वेषां धातूनां प्रयोगार्हतां प्रदर्शयति। संस्कृतवाङ्मये बहून्येतादृशानि व्याकरणोदाहरणपरकाणि काव्यरत्नानि उपलभ्यन्ते। ईदृशानि काव्यानि मुख्यतया प्रयोजनद्वयं साधयितुमुद्दिष्टानि सन्ति--

१. सरससुगमोपायेन क्लिष्टातिक्लिष्टव्याकरणतत्त्वानां साधुप्रयोगज्ञानम्।

२. व्याकरणाध्ययनकाल एव काव्यरसास्वादनञ्च।

प्रख्यात आलङ्कारिकः क्षेमेन्द्र एतादृशं काव्यं काव्यशास्त्रमित्याख्यया विभूषयति[1]। यतः शास्त्रीयोदाहरणान्यधिकृत्यैवेतानि काव्यानि विरचितानि सन्ति। संस्कृतसाहित्यस्यातीवप्राचीनेयं परम्परा। "उपान्मन्त्रकरणे"[2] तथा "अनुवादे चरणानाम्"[3] इत्यनयोः सूत्रयोरुदाहरणव्याख्यानप्रसङ्गे महर्षिपतञ्जलिनोक्तम्--

(क) "बहूनामप्यचित्तानामेको भवति चित्तवान्।
पश्य वानर सैन्येऽस्मिन् यदर्कमुपतिष्ठते"॥
"मैवं मंस्था सचितोऽयमेषोऽपि हि यथा वयम्।
एतदप्यस्य कापेयं यदर्कमुपतिष्ठति[4]"॥

(ख) "नन्दन्तु कठकलापाः। वर्धन्तां कठकौथुमाः।
...उदगात् कठकलापम्। प्रत्यष्ठात्कठकौथुमम्[5]"॥ इति।

---

१. भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते। ( सुवृत्ततिलकम्—३।४ )

२. पा॰ सू॰ १।३।२५; ३. तत्रैव–२।४।३।

४. म॰ भा॰ ( किल्हानंसम्पादिते ) भा॰ १, पृ॰ २८।

५. तत्रैव, पृ॰ ४७३-७४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यद्यपि व्याकरणविषयप्रधाना एताः कारिकाः सन्ति, तथाप्यासु कारिकासु काव्यसौन्दर्यस्य क्षीणाभासोऽवश्यं परिलक्ष्यते; परन्तु काव्यस्वरूपेण इदंप्रथमतया ख्रीष्टीयषष्ठशताब्द्यां महाकविभट्टिः भट्टिकाव्यमित्यभिधं काव्यं विरचितवान्। 'दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्[1]' इति कवेः स्वकीयवचनादस्य काव्यस्य व्याकरणत्वं सिद्ध्यत्येव। द्वादशसर्गात्मकमिदं काव्यं चतुर्षु भागेषु विभक्तमस्ति। यत्र भागद्वये पाणिनीयप्रमुखसूत्राणामुदाहरणानि, तृतीये च भागे अलङ्काराणामुदाहरणानि, अन्तिमे भागे पुनर्धातूनां लकारानुक्रमेणोदाहरणानि प्रयुक्तानि सन्ति।

तस्मात् कालादारभ्य इदानीं यावद् बहवः काव्यग्रन्था विरचिता दृश्यन्ते। तेषु भट्टभीमस्य 'रावणार्जुनीयम्', हलायुधस्य 'कविरहस्यम्' हेमचन्द्रस्य 'कुमारपालचरितम्', शिवरामत्रिपाठिनः 'नक्षत्रमाला' मङ्गलेशस्य 'विभक्तिविलासम्', वासुदेवस्य 'वासुदेवविजयम्' तथा नारायणभट्टस्य च 'धातुकाव्यम्' उल्लेखनीयमस्ति। सा च काव्यशास्त्रपरम्परा संस्कृतव्याकरण एव सीमिता नास्ति। लौकिकच्छन्दांसि प्राकृतव्याकरणनियमांश्चोदाहर्तुं नैकानि काव्यरत्नानि विरचितानि दृश्यन्ते। तत्र लौकिकछन्दःपक्षे गजमोक्ष-नक्षत्रावली-रासक्रीडादिकाव्यानां तथा प्राकृतव्याकरणपक्षे श्रीचिह्नकाव्यस्याथवा गोविन्दाभिषेककाव्यस्य नामान्युल्लिखितुं शक्यते।

## ग्रन्थस्य ग्रन्थकर्तुश्च परिचयः

धातुकाव्यमित्यभिधस्यास्य व्याकरणकाव्यस्य रचयिता प्रसिद्ध-वैयाकरणकविः श्रीमेलपुत्तूरनारायणभट्टत्तिरिः केवलं 'नारायणभट्ट' इति नाम्ना ज्ञातोऽस्ति विदुषां समाजे। प्रक्रियासर्वस्व-धातुकाव्य-नारायणीय-मानमेयोदय-पाञ्चालीस्वयंवर-सुभद्राहरण-राजसूय-सूर्पणखाप्रलाप-मत्स्यावताराद्यनेकेषां ग्रन्थानां प्रणेता नारायणभट्टः स्वजन्मना केरलप्रान्तस्योदीच्यामवस्थिततिरुनावायसमीपस्थचन्दनक्वाकुग्रामस्य नम्पूतिरिब्राह्मणकुलमलङ्कृतवान्।

अस्य कवेः जीवनकालविषये कश्चिद् विवादोऽवश्यं दृश्यते; परन्तु अन्तःप्रमाणानि बहिःप्रमाणानि चाधारीकृत्य ऐतिहासिका नारायणभट्टं षोडशसप्तदशशताब्द्योर्मध्य एव स्थापयन्ति (१५६०-१६६६[2])।

---

१. भट्टिकाव्ये—२२।३३।

२. (क) द्र० भूमिका, एस० वेङ्कटसुब्रमोनिआ-अय्यर-सम्पादितं धातुकाव्यम्, १९७०, पृ० ४७-४८।
(ख) द्र० भूमिका, भागः—१, प्रक्रियासर्वस्वम्, के० साम्बशिवसम्पादितम्, १९३१।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

नारायणभट्टो वैष्णवः कृष्णभक्तश्चासीदिति न केवलं धातुकाव्यात्; अपि तु तस्य नारायणीयाभिधाद् भक्तिकाव्यात्, प्रक्रियासर्वस्वस्थकृष्णपरकोदाहरणाच्च[1] प्रतीयते। पुनश्च—

"जुगुप्सतेऽधाद्व्यसनं तितिक्षुर्मीमांसते ब्रह्म च यो दृढात्मा[2]"।

तथा—

"तार्क्ष्ये स्थितं प्राप्य तरामि मायाम्"[3]।

इत्यादि वचनाच्च सोऽयं भक्तकविः अद्वैतवेदान्तदर्शनस्य समर्थक आसीदिति उपसंहर्तुं शक्यते।

साम्प्रतमस्य धातुकाव्यस्योपरि कृष्णार्पणविवरणाख्यं टीकाद्वयमुपलभ्यते। अनयोः कृष्णार्पणाख्या टीका नारायणभट्टस्य कैश्चित् शिष्यैरेव लिखिता[4] (येषां नामानि नोपलभ्यन्ते)। अपरा च विवरणाख्या टीका रामपाणिवादेन विरचितास्ति। काव्यमिदं सम्पूर्णरूपेणेदंप्रथमतया वेङ्किटसुब्रमेनिआ-अय्यरमहोदयेन सम्पादितम्, १९७० तमे वर्षे त्रिवान्द्रतश्च प्रकाशितमस्ति। उपर्युक्तटीकाद्वयमपि तस्मिन्नेव संस्करणे प्रकाशितं वर्तते, परन्तु, अस्य ग्रन्थस्योपरि किमप्युल्लेखनीयं समालोचनात्मकं कार्यमद्यापि नैव सञ्जातम्।

**कथावस्तुनः स्रोतः —**

धातुकाव्यस्य कथावस्तुनः स्रोतः श्रीमद्भागवतमिति निर्विवादं स्वीक्रियते विद्वद्भिः। श्रीमद्भागवतस्य दशमस्कन्धस्य षट्त्रिंशत्तमाध्यायादारभ्य चतुश्चत्वारिंशत्तमाध्यायं यावत् सप्तस्वध्यायेषु वर्णितां कथामाधारीकृत्य काव्यमिदं विरचितं कविवरेण।

**कथानकविवरणम्—**

काव्यस्यास्य कथानकमक्रूरप्रयाणादारभ्य कृष्णकृतं कंसवधं यावत् प्रवर्तते। त्रिष्वेव सर्गेषु विरचितमिदं काव्यं कृष्णचरितस्य दिनत्रयस्य कथां वर्णयतीति कृष्णार्पणटीकाकर्तुर्वचनात्[5] प्रमाणितं भवति। प्रथमे सर्गे अक्रूरस्य गोकुलयात्रा, तस्य नन्देन सह साक्षात्कारश्च वर्णितोऽस्ति। द्वितीये सर्गे कृष्णस्य गोपपुरवियोग-मथुरायात्रा-

---

१. कंसच्छेदी, प्रक्रियासर्वस्वे, ८।४।६५, कृष्णेहि, तत्रैव—६।१।९५।

२. धातुकाव्ये—२।३८; ३. तत्रैव—२।३७।

४. गुरुपादाब्जसंसेवानितान्तविमलाशयैः।
सतीर्थ्यैरद्य लिख्यन्ते धातुकाव्यार्थयोजनाः॥ (तत्रैव, कृष्णार्पणटीका, पृ० १)

५. "त्रिभिः दिनैः कृतं कर्म त्रिभिः सर्गैश्च कथ्यते"। (तत्रैव, पृ० ३)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रजकवध-कुब्जामेलन-धनुर्भङ्गनादीन्याख्यानानि वर्णितानि सन्ति । कंसप्रेरितहस्ति-चाणूरमुष्टिकादिभिः सह कृष्णबलरामयोर्युद्धं तथा कंसवधस्तस्य मोक्षप्राप्तिश्चान्तिम-सर्गस्य विषयः । अत्र कविना एकदिनात्मकं वृत्तान्तमेकस्मिन्नेव सर्गे पल्लवितं पुष्पितञ्च ।

**ग्रन्थस्य पृष्ठभूमिः —**

काव्यमिदमेकादशशताब्द्यां विरचितस्य वासुदेवकवे**र्वासुदेवविजयाभिधस्य** व्याकरणोदाहरणकाव्यस्य शेषं परिपूरयतीति कवेर्नारायणभट्टस्य स्वकीयवचनादेव[1] सिद्धयति । सप्तसर्गात्मकेऽस्मिन् वासुदेवविजयकाव्ये सम्पूर्णस्य पाणिनीयसूत्रग्रन्थस्यो-दाहरणानि प्रदर्शितानि सन्ति; परन्तु तत्र कथा अपूर्णा दृश्यते । तत्र केवलं व्योमासुर-वधं यावत् कथा वर्णितास्ति । अतोऽनुमातुं शक्यते यत् स्वकाव्ये पाणिनीयधातुपाठस्य तथोणादिसूत्राणाञ्चोदाहरणानि प्रदर्शयितुं प्रतिज्ञात आसीद् वासुदेवविजयकारः; परन्तु कस्मादप्यज्ञातकारणवशात्तस्य सा प्रतिज्ञाऽभिलाषो वा कार्यत्वेन नैव परिणतः । तमेवाभिलाषं पूरयितुकामेन नारायणभट्टेन पाणिनीयधातुपाठपठितान् धातून् उदाहर्तुं धातूदाहरणरूपं धातुकाव्याभिधमतिभव्यं काव्यं विरचितम्; परन्तु सोऽप्यर्द्धसफलः सञ्जातः । फलत उणादिसूत्राण्यद्याप्यवशिष्यन्ते । सा भागवतकथाप्यपूर्णा तिष्ठति । सम्भवतः, उणादिसूत्रोदाहरणैः कश्चिदिमां कथां पूरयिष्यतीति धिया कविनारायण-भट्टेनापीदं कथानकमपूर्णं त्यक्तम् ।

**ग्रन्थस्य व्याकरणस्रोतः —**

'धातून् क्रमेणैव हि माधवाश्रयात्[2]' इति वस्तुनिर्देशात्मकमङ्गलाचरणस्य 'माधवाश्रया'दिति वचनमाधारीकृत्योभावेव टीकाकारौ मन्येते यन्माधवीयधातुवृत्ति-माश्रित्यैव कविना नारायणभट्टेन पाणिनीयधातुपाठस्य धातवः स्वकाव्य उदाहृताः । पक्षान्तरेऽत्र "माधव" इति पदमुल्लिख्य कविर्मङ्गलार्थं स्वीयमिष्टदेवं संस्मरतीत्यपि वक्तुं शक्यते; परन्त्वपरस्मिन् ग्रन्थे प्रक्रियासर्वस्वे सोऽयं वैयाकरणकविर्माधवीयधातु-वृत्तिमुद्दिश्यैव "माधव" इति पदं प्रयुङ्क्ते । अतोऽनुमातुं शक्यते यदत्रापि धातुकाव्ये "माधव" इति पदेन कविर्माधवीयधातुवृत्तिमेव सूचयति । तत्र निर्दिष्टमेवार्थमनुसृत्य काव्येऽस्मिन् धातव उदाहृताः प्रयुक्ताश्च वर्तन्ते ।

**उदाहृतधातूनां गणदृष्ट्या वर्गीकरणम् —**

प्रथमे सर्गे, भ्वादिगणपठिताः "भू" इत्यत आरभ्य अर्हान्ता येऽन्तर्गणविरहिता धातवः सन्ति, त एवोदाहृताः । तदनु, द्वितीयसर्गे भ्वादिगणपठितद्युताद्यन्तर्गणादारभ्य

---

१. "उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः" ।। (धातुकाव्ये—१।१)

२. तत्रैव ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तुदादिगणान्तं यावत् पठितानां धातूनामुदाहरणानि सुप्रयुक्तानि । अवशिष्टाश्च रुधादिगणादारभ्य चुरादिगणान्ता धातवोऽन्तिमे सर्गे सम्यगुदाहृता दृश्यन्ते । एवं धातुकाव्यस्य त्रिष्वेव सर्गेषु समग्रपाणिनीयधातुपाठस्थदशगणेषु पठिता धातवो यथाक्रमं समुदाहृतास्तिष्ठन्ति । काव्येऽस्मिन् विविधगणपठितोदाहरणानां विभागो निम्नोक्तप्रकारेण कर्तुं शक्यते—

भ्वादिः—१।१-२।४३, अदादिः—२।४४-५३, जुहोत्यादिः—२।५४-५५, दिवादिः—२।५६-६७, स्वादिः—२।६८-७१, तुदादिः—२।७२-८४, रुधादिः—३।१-३, तनादिः—३।४, क्र्यादिः—३।५-१२, चुरादिः—३।१३-६६ ।

**धातूदाहरणप्रयोगे सामान्यनियमास्तेषाञ्चापवादाश्च—**

काव्येऽस्मिन् धातूनां कृदन्तं तिङन्तञ्चोभयविधरूपमुदाहृतं वर्तते; परन्तु तत्र सामान्यतयैकस्यैव धातोरेकमेवोदाहरणं प्रदत्तं धातुकाव्यंकारेण । कस्यचिद्धातोः कृदन्तोदाहरणमुपलभ्यते, कस्यचिदन्यस्य तिङन्तोदाहरणं प्राप्यते । तत्र च स्वाभाविकतया कृदन्तरूपाणां संख्याधिक्यं दरीदृश्यते; परन्तूपर्युक्तनियमस्यापवादोऽपि दृष्टिपथमायाति ।

कदाचिदेक एव धातुर्वारद्वयं वारत्रयं वा कृदन्ततिङन्तरूपेणोभयथा समुदाहृतो दृश्यते । तद्यथा, 'पिप्रत् कृपाभारभृतैरपाङ्गै'रित्यत्र[1] "डुभृञ्"-धारणपोषणयोरिति धातोः 'भारः', 'भृतम्' चेति रूपद्वयमुपलभ्यते, तथैव 'लाटार्हशाटोवटितैर्वटुव्रजे'रित्यत्र[2] "वट वेष्टने" इति धातोरपि 'वटितः', 'वटुः' इति रूपद्वयमुपलभ्यते । एवमन्येऽपि केचन धातवः सन्ति, येषामेकाधिकान्युदाहरणानि प्राप्यन्ते । यद्यप्येतादृशाः प्रयोगा विरलास्तथाप्यनर्थका न सन्ति । तैः किमपीष्टं सिद्ध्यत्येव ।

जुहोत्यादिगणपठिता ये धातवः पाणिनिना वैदिका उद्घोषितास्ते सामान्यतयात्र नैव समाविष्टाः; परन्तु तेषु "घृ क्षरणदीप्त्योः", "ऋ गतौ", "भस भर्त्सनदीप्त्योः", "तुर त्वरणे", "धन धान्ये" इत्यादयो धातवः, ये वैदिकाः सन्तोऽपि भाषायां प्रयुक्तास्तेषामुदाहरणान्यत्र प्रयुक्तानि सन्ति[3] ।

अदादिगणपठितं 'दीधीङ्, वेवीङ्' इति धातुद्वयं 'दीधीवेव्योश्छन्दोविषयत्वात्'-इत्युक्त्या[4] महाभाष्यकारेण वैदिकत्वेनोद्घोषितम्; परन्तु तयोरपि प्रयोगोऽत्र दृश्यते[5] । एवमन्येऽप्यस्य नियमस्यापवादा दृश्यन्ते यत्र तत्र ।

---

१. धातुकाव्ये—२।५४; २. तत्रैव—१।४०; ३. तत्रैव—२।५५ ।
४. म० भा०, पा० सू० १।१।६, भा० १, पृ० ५५; ५. धातुकाव्ये—२।५२ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पाणिनीयधातुपाठस्य बह्वर्थप्रतिपादका धातवोऽत्रैकस्मिन्नेवार्थे प्रयुक्ता दृश्यन्ते। यथा "अव" इत्यस्य धातोरष्टादशार्था[1] निर्दिष्टा वर्तन्ते धातुपाठे; परन्तु धातुकाव्ये "रक्षणम्" इत्येकस्मिन्नेवार्थे प्रयुक्तो वर्ततेऽयं धातुः[2]। अस्य नियमस्यापवादोऽपि दृश्यतेऽस्मिन् काव्ये। क्वचिद् बह्वर्थप्रतिपादका धातवो धातुपाठनिर्दिष्टेषु सर्वेष्वप्यर्थेषु प्रयुक्ताः सन्ति। तद्यथा "ज्ञा"-धातुर्मारणपोषणनिशामननिशातनाद्यर्थेषु प्रयुक्तो दृश्यते[3]।

**धातुकाव्य-माधवीयधातुवृत्त्योस्तुलना—**

व्याकरणशास्त्रपक्षे प्रायः काव्यमिदं माधवीयधातुवृत्तिमेवानुकरोति। विवादास्पदस्थलेषु माधवीयधातुवृत्तिमेव समर्थयति धातुकाव्यकारः। "इत्याद्यवस्खादितमानसास्ता बालाः परिस्खादितधैर्यबन्धाः[4]" इत्यत्र "अवस्खादितम्", "परिस्खादितम्" इति रूपद्वयमुपलभ्यते धातुकाव्ये। एतद्धि रूपद्वयं "स्खदिर् अवपरिभ्यां च[5]" इत्यनेन "न कम्यमिचमामित्यतः" 'न' इत्यनुवृत्त्य मित्त्वनिषेधाण्णिचि दीर्घे कर्मणि क्तप्रत्यये च सिद्ध्यति; परन्त्विमौ प्रयोगौ माधवीयधातुवृत्त्यनुमतौ वर्तेते। क्षीरतरङ्गिण्यां तु 'न' इत्यस्यानुवृत्तिर्नानुमता। अत एव तत्र अवपरिभ्यां योगेऽपि स्खदिरवपरिभ्यां चेत्यनेन 'स्खदिर्' इत्यस्य मित्त्वस्वीकारे दीर्घाभावे च अवस्खदयतीति रूपं सिद्ध्यति[6]।

अयमपि नियमो निरपवादो नास्ति। धातुकाव्यमपि कदाचिन्माधवीयधातुवृत्तिं पूर्णतया नानुकरोति। कदाचिन्माधवीयधातुवृत्तावनुपलब्धा अपि धातवो धातुकाव्ये उदाहृता दृश्यन्ते। तद्यथा, "प्रमान्थनं सेधतु को निषेत्स्यति"[7] इत्यत्र प्रयुक्तं प्रमान्थनमिति रूपं "प्र"-उपसर्गक "मान्थ"-हिंसाक्लेशनयोरिति धातोः "ल्युट्"प्रत्यययोगेन सिद्ध्यति; परन्तु माधवीयधातुवृत्तौ "मान्थ" इति धातुर्नोपलभ्यते।

कदाचिद्धातुकाव्ये माधवीयधातुवृत्तावुपलब्धा अपि धातवो नैवोदाहृताः। तद्यथा, धातुकाव्ये "भ्रेसृ गतौ"[8] इत्यस्योदाहरणमुपलभ्यते। माधवीयधातुवृत्तौ तथा पाणिनीयधातुपाठे निर्दिष्टस्य गत्यर्थक "भ्लेसृ" धातोरुदाहरणमत्र नैव लभ्यते।

---

१. अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, पाणिनीयधातुपाठे भ्वादिः।

२. धातुकाव्ये—१।७६;  ३. तत्रैव—२।११।

४. धातुकाव्ये—२।१९;  ५. माधवीयधातुवृत्तौ, भ्वादिः—५४९।

६. क्षीरतरङ्गिण्याम्, भ्वादिः—५६०;  ७. धातुकाव्ये—१।७।

८. तत्रैव—२।२७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कदाचिदुभयोः ग्रन्थयोर्धातूनां स्वरूपेऽपि कश्चन भेदः परिलक्ष्यते। तद्यथा, 'घघ' इति धातोः स्वरूपमुपलभ्यते धातुवृत्तौ। धातुकाव्ये तु "अलङ्घितानन्दरसात्तघर्घनाः[1]" इत्यत्र "घर्घ हसने" इत्येवं धातोः स्वरूपमुपलभ्यते, यस्मात् 'ल्युट्'-प्रत्यययोगेन 'घर्घनाः' इति रूपं सिद्ध्यति।

कदाचिदुभयत्र धातोः सरूपत्वेऽपि अर्थभेदोऽवलोक्यते। तद्यथा, 'तुजि' धातोः पालनमेवार्थो धातुवृत्तावुल्लिखितो वर्तते; परन्तु धातुकाव्ये हिंसार्थेऽपि तुजिधातोः प्रयोगो दृश्यते। पाणिनीयधातुपाठे तु 'तुज'-धातुर्हिंसार्थकः, 'तुजि'-धातुश्च पालनार्थको निर्दिष्टोऽस्ति।

एवं यद्यपि धातुकाव्यस्य धातुवृत्त्या साकं बहुत्र साम्यमनुभूयते, तथापि स्थलविशेषेषु ग्रन्थद्वयं परस्परं भिद्यत इत्यत्र नास्ति सन्देहस्यावसरः।

**धातुकाव्यस्य काव्यत्वम्—**

धातुकाव्यं न केवलं श्रीमद्भागवतस्य कथानकमनुकरोति; अपि तु बहुत्र तस्य रचनाशैलीमपि पदशोऽनुकरोति। तुलनार्थमत्रोभयग्रन्थयोः केचन श्लोकाः प्रस्तूयन्ते। तद्यथा भागवतस्य—

(क) तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः[3]॥

(ख) अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः।
स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः[4]॥

श्लोकद्वयस्यास्य भावं रचनाशैलीञ्चानुकृत्य बहून् धातूनुदाहरता धातुकाव्यकारेणोक्तम्—

(क) स्नान्त्यस्तदा श्राणमुपाश्य चान्नं निद्रां गताः प्सातिपरास्तथान्याः।
पान्त्यः शिशून् धान्यधनानि रान्त्यो लान्त्यश्च काश्चित् कुसुमानि दान्त्यः॥

(ख) ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि चटून् वचस्यः।
नार्यो विदित्वोपगतं मुरारेरासन् गता राजपथं सुमृष्टम्[5]॥

उपर्युक्तश्लोकचतुष्टयस्याध्ययनात् प्रतीयते यद् धातुकाव्यकारो नारायणभट्टः श्रीमद्भागवतस्य भाषाशैल्या काव्यगुणैश्च प्रभावित आसीत्; परन्तु समग्रधातुकाव्यस्य परिशीलनादेवमपि वक्तुं शक्यते यदस्य वैयाकरणकवे रचनायामासीत् काचिदभिनवा

१. धातुकाव्ये—१।२२; २. तत्रैव—१।३३।
३. भागवते—१०।४१।२४; ४. तत्रैव—१०।४१।२६।
५. धातुकाव्ये—२।४९-५०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

काव्यशैली । बहुत्र वृन्दावन[1]-सन्ध्या[2]-यमुना[3]-मथुरादिवर्णनप्रसङ्गेषु[4] कविः स्वकीयां कवित्वप्रतिभां पूर्णतया प्रकटयितुं समर्थो भवति । नीरसातिनीरसानपि धातुसमुदायानुदाहरन्नसौ कविरेतादृक्सरसकाव्यरचनायां पूर्णसफलो सञ्जात इति तत्र पाठका एव प्रमाणम् । यद्यपि धातूदाहरणप्रयोगे दत्तचित्तस्य कवेः कविप्रतिभा क्वचित् सङ्कुचिता दृश्यते, तथापि व्याकरणोदाहरणपरकमिदं काव्यरत्नं प्रायः सर्वैरुत्तमकाव्यगुणैर्विभूषितं सदनुक्षणं सहृदयचेतसां सुकुमारचेतो विनोदयति काव्यमदेन सम्मोहयति च ।

भक्तिकाव्येऽस्मिन् मुख्यतया रसद्वयस्यानुभूतिर्जायते—१. भक्तिरसः, २. वीररसश्च । द्वितीये सर्गे कृष्णबलरामयोर्मथुरायात्राप्रसङ्गे, अभिनवशृङ्गाररसस्याप्यनुभवो जायते यत्र तत्र ।

काव्यस्यास्य मुख्यं छन्दो यद्यपि वंशस्थमस्ति, तथापि तृतीये सर्गे मुख्यतया वसन्ततिलकाछन्दसः प्रयोगो दृश्यते; परन्तु प्रथमसर्गान्ते द्वादशश्लोकाः, द्वितीयसर्गान्ते पञ्चविंशतिश्लोकाः, तृतीयसर्गान्ते षड्विंशतिश्लोकाश्च उपजाति-वसन्ततिलका-आर्या-स्रग्धरा-शिखरिण्यादिभिर्बहुभिः छन्दोभिर्विरचिताः सन्ति ।

अलङ्कारदृष्ट्यापि काव्यमिदं समृद्धमस्ति । अत्र स्वभावोक्ति[5]-श्लेष[6]-विरोधाभास[7]-उत्प्रेक्षाद्यर्थालङ्काराणां[8] तथा यत्र तत्र शब्दालङ्काराणामप्यभिनवचित्रणं समुपलभ्यते ।

**उपसंहारः —**

"यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्", "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । "प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति,[9]" "तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते[10]" इत्यादिवचनादेवमनुमातुं शक्यते यत् पुरा शिक्षाक्षेत्रे व्याकरणाध्ययनस्य महती भूमिकाऽऽसीत् । तामेव भूमिकां सहजतया सम्पादयितुं भारते नैका व्याकरणपरम्पराः

---

१. धातुकाव्ये—१।१८-३०; २. तत्रैव—१।४९-६० ।
३. तत्रैव—२।२२-२८; ४. तत्रैव—२।७१-७९ ।
५. तत्रैव—२।५६; ६. तत्रैव—१।२८ ।
७. तत्रैव—२।१३; ८. तत्रैव—१।५४ ।
९. म० भा० १।१।१, पृ० १; १०. वाक्यपदीये—१।१३ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जनिं लेभिरे; परन्तु तथापि शार्दूलोपमं व्याकरणं क्लिष्टत्वदोषान्मुक्तं नाभवदिति महती चिन्ताऽऽसीदस्माकं पूर्वजानाम्[१]। अत एव भारतवर्षस्य ( विशिष्य केरलस्य ) केचन वैयाकरणा व्याकरणे छात्राणामध्येतॄणां च रुचिं जनयितुं क्लिष्टातिक्लिष्ट-व्याकरणबिन्दूनामुदाहरणानि गृहीत्वा सरसातिसरसकाव्यनिचयं विरचितवन्तः। व्याकरणस्य प्रयोगज्ञानं तस्य चावधारणं व्याकरणपठनमात्रेण तथा न भवति, यथानेन माध्यमेन। इदमेव कारणमस्ति येन कालान्तरेऽस्यां दिशि बह्व्यः सरसरचनाः सञ्जाताः। फलतः, आलङ्कारिकैरेतादृशीनां संरचनानां कृते 'काव्यशास्त्रम्' अथवा 'शास्त्रकाव्यम्' इत्यभिधः कश्चित् स्वतन्त्रो वर्गः संरक्षितः। यद्यप्येकस्मिन्नेव काव्ये सर्वे व्याकरणबिन्दवः समुदाहृता न वर्तन्ते, तथाप्यस्य वर्गस्योपलब्धसमग्रकाव्यराशिमधीत्य कश्चिद् व्याकरणे निष्णातो भवितुमर्हतीति निःसन्देहं वक्तुं शक्यते।



---

१. "दुष्टग्रहग्रहीतो वा भीतो वा राजदण्डतः।
पितृभ्यामभिशप्तो वा कुर्याद् व्याकरणे श्रमम्"॥
( जयन्तभट्टस्य न्यायमञ्जर्याम्, पृ० ४१८ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# कालिदासस्योपमाविन्यासः

डॉ० गिरिजादत्तत्रिपाठी
उपाचार्यः,
श्रीद्वारकाधीशसंस्कृताकादम्याः
द्वारका (गुजरातप्रदेशः)

❀ ❀ ❀

कालिदासस्य महाकवेः काव्येषु उपमालङ्कृतेर्यदा रसानास्वादयामस्तदा प्रतीतिर्जायते यद् अलङ्कारसागरे उन्मज्जामो निमज्जामो वा । महाकविरुपमाप्रयोगे सिद्धहस्तः । उपमाप्रयोगे क्वचिद् अस्य प्रकृतेः सूक्ष्मनिरीक्षणम्, क्वचिद् विद्यावैविध्यस्य सम्यगवबोधः, क्वचिज्जीवनस्य मर्मस्पर्शि चित्रणं नृत्यतीव समक्षम् । अस्मिन्नुपमासङ्कलने नास्ति मदीयोऽभिनिवेश इत्थं यद् ये अंशा उपमायाः सीम्नि आयान्ति, त एवात्र स्थानं गृह्णीयुः । परिणामतो निदर्शनोत्प्रेक्षादीनामपि यानि उदाहरणानि भवन्ति, तान्यपि स्थलानि क्वचिद् गृहीतानि । उपमालङ्कृतिर्भूमिकाभेदेन नानारूपाणि नटीव आधत्ते—

उपमा यत्र शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥ (चित्रमीमांसायाम्, पृ० ४१)

रघुवंशाभिज्ञानशाकुन्तलाभ्यां स्वरुच्यनुसारमुपमालङ्कृतयोऽत्र निबन्धे मया सङ्कलिताः । इत्थं नास्ति यद् उपमायाः सर्वाणि स्थलानि मया अत्र संगृहीतानि परमिदमवश्यं यद् उपमाया आस्वादयितार एकत्र अनायासं इयत्संख्याका उपमाः लप्स्यन्ते ।

अभिज्ञानशाकुन्तलस्य प्रथमेऽङ्के मुनिकन्यानेपथ्यां शकुन्तलां सखिभिः सह वृक्षसेचनव्यापृतामालक्ष्य राजा दुष्यन्तो भणति यत् कण्वो भगवान् निसर्गमधुरां कन्यामिमां तपसि व्यापारयति, यथा कश्चिद् नीलपद्मधारया शमीलतां छेत्तुं व्यवस्यते[1] ।

शकुन्तलाया अधरः पल्लवताम्रः, भुजौ मृदुशाखासमानौ, पुष्पमिव कमनीयं तारुण्यमस्या अङ्गेषु आविर्भूतम्[2] ।

राजा जिज्ञासते शकुन्तलां प्रति यदियं वैखानसीं वृत्तिमापरिणयं धारयिष्यति अथवा सदृशेक्षणवल्लभाभिरङ्गनाभिर्हरिणानां सहैवात्र वत्स्यत्याजीवनम्[3] ।

---

१. अभिज्ञानशाकुन्तले—१।१८;     २. तत्रैव—१।२१;     ३. तत्रैव—१।२६ ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

शकुन्तलायां राजा दुष्यन्तः पूर्णतयाऽऽसक्तोऽस्ति । आश्रमाद् गच्छन् वक्ति यत् शरीरं मम अग्रे अग्रे चलति, परं मनः पृष्ठं पलायते, यथा नीयमानस्य ध्वजस्य ऊर्ध्वभागे संसक्तं चीनांशुकं वातेन प्रतिहन्यमानं विपरीतां दिशं धावति[१] ।

मुनिकण्वस्य सविधे दैवादागतां शकुन्तलां प्रति दुष्यन्तो ब्रूते यद् यथा नवमालिका-पुष्पं निजवृन्तात् च्युतं मन्दारवृक्षे समापतति, तथैवानिन्द्यसौन्दर्यवैभवेयं शकुन्तला कण्वाश्रमे आगता[२] ।

राजा दुष्यन्तः शकुन्तलाया अभुक्तं लावण्यं विवृणोति यदियमनाघ्रातं पुष्पमिव, नखैरविदलितं नवपत्रमिव, छिद्रादिसंस्काररहीनं रत्नमिव, अनास्वादितं नवं मधु इव, पुण्यानामखण्डं फलमिव, एवंविशेषणविशिष्टां शकुन्तलां भोक्तुं विधिः न जाने कं पुरुषं निर्मास्यति[३] ।

दुर्वासा उपेक्षामाकलय्य शकुन्तलां शपति यद् यं प्रियं त्वं रागासक्ता चिन्तयसि, स स्मारितवार्तः प्रमत्त इव त्वां न स्मरिष्यति[४] ।

आकाशवाण्या कण्वः शकुन्तलाया गर्भिणीभावमवगच्छति—"हे ब्रह्मन् तव कन्यायां दुष्यन्तेन स्वीयं तेज आहितम्, तदिमां अग्निगर्भां शमीमिव अवगच्छ[५]" ।

कञ्चुकी राजानमवलोक्य ब्रूते यद् यथा गजराजः स्वाः प्रजाः स्वस्वकर्मसु नियोज्य सूर्यस्य प्रखरकिरणैस्तप्तो गिरिगुहायां विश्रमति, तथैव राजा अपि स्वाः प्रजाः तत्तत्कर्मसु नियोज्य एकान्तमाश्रयति[६] ।

शार्ङ्गरवो राज्यं राजानञ्च स्तुवन् ब्रूते यद् महाभागो राजा कदापि मर्यादाच्युतो न भवति, चतुर्वर्णेषु कश्चिदपि अनाचारे न प्रवर्तते परमेकान्तपरिचयात् केवलं मानवसमुदायमिमं वह्निसमावृतं गृहमिव मन्ये[७] ।

शार्ङ्गरवो राजानं सम्बोधयति यत् प्रशंसापात्रेषु पुरुषेषु त्वमग्रणीरसि, शकुन्तलेयं मूर्तिमती सत्क्रिया समा अस्ति, त्वां शकुन्तलां च विधिः सम्मेल्य अनिन्दितोऽभूत्[८] ।

शकुन्तलायाः प्रत्याख्यानानन्तरं प्राप्ते अङ्गुलीयके विरहदग्धस्य राज्ञो विषये कञ्चुकी अभिधत्ते—राजा विशेषानलङ्कारान् अत्यजत्, वामे हस्ते मात्रमेकं स्वर्णवलयं तदपि स्रस्तम्, रात्रिजागरणवशाद् रक्ते जाते नेत्रे, इत्थं क्षीणसत्त्वोऽपि राजा शाणोल्लिखितो महामणिरिव तेजोयुक्तो दृश्यते[९] ।

---

१. अभिज्ञानशाकुन्तले—१।३३; २. तत्रैव—२।८; ३. तत्रैव—२।१० ।
४. तत्रैव—४।१; ५. तत्रैव—४।३; ६. तत्रैव–५।५ ।
७. तत्रैव—५।१०; ८. तत्रैव—५।१५; ९. तत्रैव—६।६ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

महर्षिकाश्यपस्य आश्रमं पृच्छन्तं राजानं मातलिर्ब्रूते यद् यस्य वपुः वल्मीकेषु अन्तर्हितम्, यस्य वपुषि सर्वत्वचो यज्ञापवीतं संसक्तम्, प्राचीनलताजालैरावेष्टतत्वाद् यस्य वपुः पीडितम्, यस्य जटासु विहगा नीडान् व्यरचयन्, स मुनिः स्थाणुरिव अभ्यर्कबिम्बं स्थितो वर्तते[1]।

तत्रभवान् मारीचो राजानं सम्बोधयन् अभिधत्ते यत् साध्वी शकुन्तला, उत्तमस्त्वत्पुत्रः, त्वं च एकत्रितोऽसि, तदिदं विलोक्य प्रतीयते यत् श्रद्धा वित्तं विधिश्च परस्परं मिलिताः सन्ति[2]।

महाकविः कालिदासो रघुवशं प्रारभमाणो मङ्गलमाचरति यद् अहं कालिदासः वागर्थाविव परस्परं संसक्तौ पार्वतीपरमेश्वरौ शब्दार्थज्ञानप्राप्तये प्रणमामि[3]।

क्व सूर्यप्रभवो वंशः, क्व च मम अल्पविषयावगाहिनी मतिः, यथा कश्चिदल्पमतिः लघ्व्या नावा सागरं तितीर्षेत्, तथैव कविकीर्तिकाङ्क्षी अहं कालिदासोऽपि उपहास्यतां गमिष्यामि, यथा कश्चिद् वामनः प्रांशुलभ्यं फलं लिप्सुरुद्‌बाहुः सन् हास्यास्पदतां प्राप्नोति[4]।

कालिदासो वक्ति यद् या गतिर्वज्रकृतकुहरे मणौ सूत्रस्य भवति, सैव गतिर्मम अपि सूरिभिः कृतव्याख्याने रघुवंशे[5]।

राज्ञो दिलीपस्य विचारा गुप्ता भवन्ति स्म, तस्य शारीराश्चेष्टा अपि गुप्ता आसन्, तस्य राज्ञः साम-दाम-दण्ड-भेदादिकं प्राक्तनाः संस्कारा इव फलानुमेयं भवति स्म[6]।

पत्न्या सुदक्षिणया सह वशिष्ठाश्रमं गच्छतो महाराजदिलीपस्य अद्‌भुतैव शोभा आसीत्। शिशिरर्तौ चित्रानक्षत्रयुतायां पूर्णिमायां चित्रया सह यथा निशाकरः शोभते, तथैव सुदक्षिणया सह राजा दिलीपः शुशुभे[7]।

सायंतने सन्ध्याजपादिकर्मणि सम्पन्ने अरुन्धत्योपासितो वशिष्ठः स्वाहयोपासितो हुतवह इव शुशुभे[8]। नन्दिन्याः खुरन्यासपवित्ररजसि मार्गे नन्दिनीमन्वगच्छत् सुदक्षिणा, यथा श्रुत्यर्थमनुयान्ति स्मृतयः[9]। राजा दिलीपः स्वां प्रियां परावर्त्य, स्तनीभूतचतुस्सागरां पृथ्वीमिव नन्दिनीं जुगोप[10]। मार्गे राज्ञा दिलीपेन अनुगम्यमाना पत्न्या सुदक्षिणया च सत्क्रियमाणा नन्दिनी उभयोर्मध्ये दिवस-क्षपामध्यगता सन्ध्या इव शुशुभे[11]। शरीरसादाद् अल्पालङ्कारा पीतमुखी क्षीणाभा सुदक्षिणा अल्पतारका प्रभातकालिकी रजनी क्षीणपुत्रेण चन्द्रमसा सहेव ददृशे[12]।

---

१. अ० शा० ७।११;   २. तत्रैव—७।२९;   ३. रघुवंशमहाकाव्ये—१।१।
४. तत्रैव—१।२-३;   ५. तत्रैव—१।४;   ६. तत्रैव—१।२०।
७. तत्रैव—१।४६;   ८. तत्रैव—१।५६;   ९. तत्रैव—२।२।
१०. तत्रैव—२।३;   ११. तत्रैव—२।२०;   १२. तत्रैव—३।२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

राजा दिलीपः स्वां पत्नीं सुदक्षिणां रत्नगर्भां समुद्रवसनां पृथ्वीमिव, अग्निगर्भां शमीलतामिव, अन्तःसलिलां सरस्वतीमिव धृतगर्भाममन्यत[१]। इन्द्राणीसमाना सुदक्षिणा उच्चस्थैः असूर्यंगैः पञ्चभिर्ग्रहैः लक्षितभाग्यसम्पदं पुत्रं त्रिसाधनाशक्तिप्रसूतमर्थमिव असूत[२]। सर्वैश्वर्यसम्पन्नस्य पितुः प्रयत्नेन बालको रघुः रविमयूखप्रवेशाद् बालचन्द्र इव पुपोष[३]। उमामहेश्वरौ कार्तिकेयेन समं शचीपुरन्दरौ जयन्तेनेव तौ दम्पती स्वेन पुत्रेण रघुणा आनन्दभाजौ बभूवतुः[४]। चूडाकरणसंस्कारानन्तरं सवयोभिरमात्यपुत्रैः सह रघुर्वाङ्मये तथैव विवेश, यथा नदीस्थजलजन्तवो नदीमाध्यमेन सागरे विशन्ति[५]।

वायुना अग्निरिव, शरदर्तौ निरभ्रेण नभसा सूर्य इव, मदधारया गन्धगज इव रघुणा (युतः) दिलीपोऽपरेषां राज्ञामसह्योऽभवत्[६]। कौत्सो राजानं सम्बोधयन् ब्रवीति यत् सत्पात्रेषु दत्तसर्वस्वः अवशिष्टशरीरमात्रो भवान् आरण्यकोपात्ताशेषफलत्वाद् नीवारयष्टिरिव शोभसे[७]।

यथा हर्षातिरेकेण मधुरं निनदद्भिः राजहंसैः प्रबोधितः सुप्रतीक-नामा गजः सैकतं गङ्गातटमुज्झति, तथैव वन्दीजनकृतस्तुतिपाठैः जागरितः कुमारोऽजः शय्यां जहौ[८]। राजकुमारोऽजो विदर्भराजनिर्दिष्टेन सुक्लृप्तसोपानपथेन सिंहशावः शिलाखण्डैः पर्वतशृङ्गमिव मञ्चमारुरोह[९]। बहुमूल्यासनान्यधिरूढेषु स्वविशेषकान्त्या मेघेषु विद्युदिव दुर्निरीक्ष्यः, उत्तमवेषेषु राजसु कल्पवृक्षेषु पारिजात इव स अजः प्रकामं शुशुभे। पौरनेत्राणि सर्वान् राज्ञः परित्यज्य अजमेव अपश्यन्, यथा भ्रमरकदम्बकानि पुष्पितवृक्षान् परित्यज्य गन्धगजमभिधावन्ति[१०]। स्वयंवरे इन्दुमती सुनन्दा विज्ञापितान् राज्ञः परित्यज्य अग्रे ससार, यथा समुद्रगामिनी नदी पर्वतं परित्यज्य अग्रे सरति[११]।

यथा रविरश्मिविरहात् सम्पुटितकोशेषु कमलेषु चन्द्ररश्मयो न विशन्ति, तथैव सुनन्दावचांसि इन्दुमतीचित्ते नैव प्राविशन्[१२]। यं यं राजानं व्यतीत्य इन्दुमती अग्रे ससार, स स राजा दीपशिखया सञ्चारिण्या राजपथस्थभवनानीव विवर्णभावं भेजे[१३]। निरवद्यावयवमजं प्राप्य इन्दुमती अन्यराजन्योपगमाद् विरताभूत्, यतो हि भ्रमराली प्रफुल्लमाम्रवृक्षं परित्यज्य वृक्षान्तरं न कामयते[१४]। अजविषयकवर्णनाद् विरतायां

---

१. रघुवंशमहाकाव्ये—३।९; २. तत्रैव—३।१३; ३ तत्रैव—३।२२। ४. तत्रैव—३।२३; ५. तत्रैव—३।२८; ६ तत्रैव—३।३७। ७. तत्रैव—५।१५; ८. तत्रैव—५।७५; ९. तत्रैव—६।३। १०. तत्रैव—६।७; ११. तत्रैव—६।५२; १२. तत्रैव—६।६६। १३. तत्रैव—६।६७; १४. तत्रैव—६।६९।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सुनन्दायाम् इन्दुमती संवरणस्रजेव प्रसादोत्फुल्लया दृष्ट्या अजं वृतवती[१]। स्वयंवर-स्थले एकतः प्रमुदितो वरपक्षः, अपरतो निराशं नृपमण्डलं तथैव प्रतीयते यथा एकत उषाकाले विकसितं कमलं संकुचितमपरतश्च कुमुदवनम्[२]।

भोजराजकन्यामिन्दुमतीमाहरन्तमजं नृपसमुदाय उद्धतो न्यवारयत्, यथा बलिलक्ष्मीमाहरन्तं वामनं पादौ प्रगृह्येन्द्रशत्रुः प्रह्लादो न्यवारयत्[३]।

रुधिरदिग्धा युद्धभूमिर्मृत्योर्मधुशालेव व्यराजत, तत्र बाणभिन्नानि शिरांसि फलानीव, शिरस्त्राणानि मद्यपात्राणीवासन्[४]। अस्त्रैः परिवृतरथोऽजो ध्वजमात्रेण चिह्नेन परिच्येयोऽभूत्, यथा कुहरसमाच्छादितो दिनस्य पूर्वभागः सूर्यस्य प्रकाशैः कथञ्चिद् दृष्टिगोचरो भवति[५]। शङ्खध्वानं निशम्य परावृत्ता योद्धार उत्सन्नशत्रुमजं संकुचितकमलेषु द्योतमानं विधुमिव ददृशुः[६]। प्रांशुबाहुरजः पृथ्वीं नववधूमिव सदयमुपभुक्तवान्[७]। अचेतनेन्द्रियामिन्दुमतीमङ्के निधाय अजो धृतमृगलाञ्छन उषःकालिकचन्द्रमा इव अदृश्यत[८]।

अजो विलपन् ब्रूते यद् हे प्रिये ! त्वं स्वज्ञानेन मम विषादं शीघ्रं शमयितुमर्हसि, यथा तृणज्योतिनामकमौषधं हिमालयगह्वरगतं ध्वान्तं स्वभासा अपनयति[९]।

नीतिगुणसंवर्धितामुपकाररूपफलां नृपदशरथस्य सम्पदं यथा अर्थिन उपजग्मुः, तथैव मधुपरिपुष्टाः सरःकमलिनीः हंसभ्रमरादय उपजग्मुः[१०]। विकसितपुष्पैः सुरभितासु वनपङ्क्तिषु पिकरुता गीर्मुग्धा-नायिकाया रतिकथेव मन्दं मन्दमश्रूयत[११]।

भ्रमरगुञ्जारवत्योऽत एव कर्णसुखा मृदुप्रसूनदन्तच्छवय उपोपवनं लताः पवनप्रेरितैर्नवपल्लवैर्लययुक्तैर्हस्तैरिव बभुः[१२]।

यथा आञ्जनं तिलकं सुन्दरीं विभूषयति, तथैव भ्रमरालिङ्गितपुष्पास्तिलक-वृक्षा वनस्थलीं विभूषयन्ति[१३]। कार्यान्तराणि विस्मृत्य मन्त्रिषु राज्यभारं निक्षिप्य वर्द्धितरागं राजानं मृगया कामिनीव चकर्ष[१४]। यथा गाङ्गः प्रवाहो भिन्न-भिन्नमार्गैः सागरं मिलति, तथैव सिद्धेः कारणभूता अनेके मार्गा आगमैर्भिन्ना अपि त्वां मिलन्ति[१५]। राजा दशरथः चरुरूपं वैष्णवं तेजः कौशल्या-कैकेय्योर्मध्ये व्यभजत्, यथा दिनपतिः सूर्यो निजरश्मिनिकरं द्यावापृथ्व्योः विभजति[१६]। राज्ञी सुमित्रा द्वे अपि राज्ञ्यौ प्रति

---

१. रघुवंशमहाकाव्ये--६।८०; २. तत्रैव--६।८६; ३. तत्रैव—७।३५।
४. तत्रैव —७।४९; ५ तत्रैव—७।६०; ६. तत्रैव—७।६४।
७ तत्रैव—८।७; ८. तत्रैव ८।४२; ९. तत्रैव—८ ५४।
१०. तत्रैव--९।२७; ११. तत्रैव—९।३४; १२. तत्रैव—९।३५।
१३. तत्रैव—९।४१; १४. तत्रैव—९।६९; १५. तत्रैव—१०।२६।
१६. तत्रैव—१०।५४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तथैव प्रेम करोति स्म, यथा हस्तिनो द्वेऽपि कपोलभित्ती: प्रति भ्रमरी प्रेम करोति[१]। धृतगर्भास्ता राज्ञ्यः पीतिम्ना तथैव शुशुभिरे यथा अन्तःफलारम्भा धान्यसम्पदः पीतिम्ना शोभन्ते[२]।

तासां राज्ञोनां कुक्षिषु एको विष्णुरनेकधा विभज्य प्रसन्नजलेषु चन्द्रमा इव उवास[३]। शय्यायां प्रकटितेन श्रीरामचन्द्रेण कृशोदरी माता कौशल्या तथैव शुशुभे यथा शरदर्तौ क्षीणतोया गङ्गा स्वबालुकामये तटे कमलोपहारैः शोभते[४]।

कैकेय्याः गर्भादुत्पन्नो भरतो मातरं विनयो लक्ष्मीमिव अलञ्चकार[५]। सुमित्रा लक्ष्मणं शत्रुघ्नं च पुत्रद्वयमसूत, यथा सम्यगाराधिता विद्या, ज्ञानमिन्द्रियजयं च सूते[६]। मणिकुट्टिमे चलनार्हौ रामलक्ष्मणौ मुनिप्रदत्तबलातिबलाविद्याप्रभावाद् मातृपार्श्ववर्तिनौ इव न म्लानौ[७]।

श्रीरामो रक्षोविनाशकं मन्त्रयुक्तमस्त्रं पराक्रमात् सन्तुष्टाद् मुनेस्तथैव प्राप्तवान् यथा सूर्यकान्तमणिः इध्मज्वलनं ज्योतिः सूर्यात् प्राप्नोति[८]।

तत्र दीक्षितमृषिं विश्वामित्रं रामलक्ष्मणौ निजबाणैस्तथैव ररक्षतुः, यथा इन्दुप्रभाकरौ निजरश्मिभिर्जगतोऽन्धकारं व्यपोह्य संसारं रक्षतः[९]। ऋषिर्विश्वामित्रो जनकं जगाद यद् बालकममुं ध्यानेन शृणु, अथवा कथनेन किम्, यथा वज्रशक्तिर्गिरावेव प्रकटिता भवति, तथैव अस्य शक्तिः धनुष्येव व्यक्तीभविष्यति[१०]।

राजा जनकः समीपवर्तिनो जनान् धनुराहर्तुमादिदेश यथा इन्द्रस्तेजोमयस्य इन्द्रधनुष आविर्भावाय मेघवृन्दमादिशति[११]।

राज्ञो जनकस्य ताः पुत्र्यो दशरथस्य पुत्रैः, दशरथपुत्राः जनकस्य पुत्रीभिः कृतार्था अभूवन्। स वरवधूसमागमः प्रकृतिप्रत्यययोग इव बभूव[१२]। श्येनपक्षमिव धूसरालकाः, सान्ध्यमेघ इव रक्तार्द्रवस्त्राः, ऋतुमत्यः स्त्रिय इव दिशोऽदर्शनीया जाताः[१३]। अन्येन राज्ञा अभङ्ग्यं धनुस्त्वमभञ्जयः, तदिदमहं मन्ये यत् त्वं मम पराक्रमस्य शृङ्गमेव अत्रोटयः[१४]। विषयस्य स्नेहरसमुपभुक्तवान् राजा दशरथः, वृद्धावस्थां प्राप्तवान्, यथा प्रातःप्रदीपो निष्प्रभो भवति[१५]। यथा वर्षर्तौ भूमिः स्वविवरात् सर्पद्वयमुद्गमयेत्, तथैव कैकेय्यपि राज्ञा प्रतिज्ञातं वरद्वयं स्वमुखविवराद् उद्भावयत्[१६]। जनकस्य पुत्री सीता कैकेय्या वारिता अपि राममनुसरन्ती गुणाननुसरन्ती

१. रघुवंशमहाकाव्ये—१०।५७; २. तत्रैव—१०।५९; ३. तत्रैव—१०।६५।
४. तत्रैव—१०।६९; ५. तत्रैव—१०।७०; ६. तत्रैव—१०।७१।
७. तत्रैव—११।९; ८. तत्रैव—११।२१; ९. तत्रैव—११।२४।
१०. तत्रैव—११।४१; ११. तत्रैव—११।४३; १२. तत्रैव—११।५६।
१३. तत्रैव—११।६०; १४. तत्रैव—११।७२; १५. तत्रैव—१२।१।
१६. तत्रैव—१२।५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लक्ष्मीरिव शुशुभे[१]। ग्रीष्मपीडिता सर्पिणी यथा चन्दनवृक्षमुपसर्पति, तथैव कामपीडिता रावणानुजा राममनुससार[२]।

सर्वप्रथमं राममनुसृता शूर्पणखा लक्ष्मणेनापि नाभिनन्दिता। सा पुनः राममुपसृतवती यथा नदी कूलोभयमाश्रयति[३]। सम्पातिदर्शनात् लब्धसीतोदन्तो हनुमान् सागरं तथैव ततार यथा कश्चिद् अनासक्तः संसारं सन्तरति[४]।

लङ्कायां हनुमता मृग्यमाणा राक्षसीभिः समावृता सीता विषलतावृता संजीवनीलतेव अदृश्यत[५]। पराक्रमपर्यायेण जयश्रीः मत्तवारणयोर्मध्ये वेदिरिव रामरावणयोर्मध्ये सामान्या बभूव[६]।

सुन्दरि सीते चित्रकूटोऽयं गिरिर्मम दृष्टिं मत्तवृषभ इवाकर्षति। कन्दरारूपेण मुखेन धारायाः कलकलनिनादरूपध्वनिना शिखरशृङ्गे वप्रक्रीडायाः पङ्कमाश्लिष्य स्थितः[७]। उपचित्रकूटं प्रवहन्ती मन्दाकिनी स्वच्छं मन्दं च सती अधिग्रीवं वसुन्धराया मुक्तामालेव अशोभत[८]। पित्राज्ञापालयितारं मां रामं साधुः भरतो निष्पापां राज्यलक्ष्मीं प्रत्यावर्तयिष्यति यथा खरदूषणं हत्वा परावर्तमानं मां लक्ष्मणः सीतां परावर्तयत्[९]।

भूयः श्रीरामः स्वैरगतिं विमानमारूढवान् यथा बुधबृहस्पतियोगाद् दर्शनीयः चन्द्रमा चलद्विद्युत्वन्तं मेघवृन्दमारोहति[१०]। द्वयोर्मात्रोः आनन्दाश्रुशीतलं शोकोत्पन्नं ग्रीष्माश्रु प्राशमयत्, यथा गङ्गासरय्वोः उष्णजलं हिमगिरेर्निर्झरजलं शीतयते[११]। यथा सेनापतेः कार्तिकेयस्य तिसृणां कृत्तिकानां स्तनपानेषु समानो भाव आसीत्, तथैव रामस्यापि तिस्रो मातरः प्रति समानभाव आसीत्[१२]। जलवीचिषु प्रसृतान् तैलबिन्दूनिव अपवादान् तथैव न सोढुं शक्नोमि यथा प्रथमवारं बद्धो गजः स्थूणां न सहते[१३]।

सत्यप्रतिज्ञो लक्ष्मणः सूतेन वारितेषु अश्वेषु तटे अवतार्य निषादानीतया नावा गङ्गां ततार यथा कश्चित् सत्यप्रतिज्ञः स्वप्रतिज्ञां पूरयति[१४]। पराभववायुना अभिहता अत एव विशीर्णपुष्पाभरणा लतेव सीता जन्मयोनौ धरायां पपात[१५]। कुशमनुयान्ती चमूः मेघवृन्दमनुगच्छन् वायुरिव बभौ[१६]। यथा चन्द्रमसा तटाभिमुखं समुद्र आकृष्यते, तथैव कुशेन समग्रसैन्यसमूहः अयोध्याभिमुखं प्रस्थाप्यमानोऽशोभत[१७]।

---

१. रघुवंशमहाकाव्ये—१२।२६; २. तत्रैव—१२।३२; ३. तत्रैव—१२।३५।
४. तत्रैव—१२।६०; ५. तत्रैव—१२।६१; ६. तत्रैव—१२।९३।
७. तत्रैव—१३।४७; ८. तत्रैव—१३।४८; ९. तत्रैव—१३।६५।
१०. तत्रैव—१३।७६; ११. तत्रैव—१४।३; १२. तत्रैव—१४।२२।
१३. तत्रैव—१४।३८; १४. तत्रैव—१४।५२; १५. तत्रैव १४।५४।
१६. तत्रैव—१६।२५; १७. तत्रैव—१६।२७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यथा मेघो निदाघदग्धां पृथ्वीं परिषिच्य जीवयति, तथैव कुशनियुक्ताः शिल्पिनः सम्पूर्णसाधनैरयोध्यां नवीचक्रुः[१]।

जले विहरन्तीनां रमणीनां शिरीषाभरणानि भ्रष्टानि, तानि चञ्चच्छैवलानीव मत्स्यान् भ्रमयन्ति, अर्थाद् मत्स्याः शिरीषकुसुमानि शैवलानीव विलोक्य गृह्णन्ति तानि पुनरप्राप्य छलिता भवन्ति[२]।

यथा अधिस्कन्धं न्यस्तपुण्डरीको गजः करिणीभिः समं क्रीडति, तथैव तरलहारः कुशो नावोऽवतीर्य रमणीभिः सह जले चिक्रीड[३]।

विशालनेत्राः सुन्दर्यः स्वर्णिमश्रृङ्गकेभ्योः निस्सरद्भिः कुङ्कुमादिमिश्रितैः जलैः तं कुशमभ्यसिञ्चन्, तदा कुशो गैरिकधातुधाराभिरभिसिञ्चितः पर्वतराज-हिमालय इव शुशुभे[४]।

१. रघुवंशमहाकाव्ये—१६।३८; २. तत्रैव—१६।६१; ३. तत्रैव—१६।६८।
४. तत्रैव—१६।७०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आचार्यकुन्दकुन्दस्य प्राकृतग्रन्थेषु सम्यग्ज्ञानविमर्शः

डॉ० ऋषभचन्द्रजैनः 'फौजदारः'

रिसर्च-एशोसिएट्,

प्राकृत-जैनागमविभागस्य,

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी

❀❀❀

ज्ञानस्य व्युत्पत्तिलभ्योऽर्थस्त्रिधा सम्भवति। तद्यथा—

(१) जानातीति ज्ञानम्।

(२) ज्ञायतेऽनेनेति ज्ञानम्।

(३) ज्ञप्तिमात्रं ज्ञानम्।

एवं कर्तृसाधनत्वेन, करणसाधनत्वेन, भावसाधनत्वेन च ज्ञानस्य सामान्यलक्षणं क्रियते। एतज्ज्ञानं सम्यग्ज्ञानं मिथ्याज्ञानं वा भवति। इन्द्रियजन्यं ज्ञानमिन्द्रियाणां सदोषत्वे संशयरूपम्, विपर्ययरूपम्, अनध्यवसायरूपं वा भवितुं शक्नोति। स्थाणुर्वा पुरुषो वेति संशयज्ञानम्। शुक्तिकायाम् 'इदं रजतम्' इति विपर्ययज्ञानम्। मार्गे गच्छतस्तृणस्पर्शादिज्ञानमनध्यवसायः। एतत् सर्वं मिथ्याज्ञानम्।

अतो यज्ज्ञानं संशयादिरहितं भवति, तदेव सम्यग्ज्ञानं कथ्यते। जैनदर्शने ज्ञानं जीवस्य स्वस्वरूपम्। गुणगुणिनोरभेदाज्जीवस्य ज्ञानस्य चाभेदः। एवं स्वस्वरूप-परिज्ञानमेव वास्तविकं ज्ञानम्। तदेव सम्यग्ज्ञानम्। अत एव निश्चयनयापेक्षया सर्वज्ञस्य यज्ज्ञानम्, तदेव सम्यग्ज्ञानम्। व्यवहारनयापेक्षया संसारिजीवानां यथा ज्ञानावरणकर्मक्षयोपशमः, तथा तस्य ज्ञानं सम्यक्त्वं मिथ्यात्वं वा भजते। ज्ञानावरण-कर्मणः क्षयोपशमे सति जीवस्य यावन्मात्रो ज्ञस्वभावः प्रकटीभवति, तावन्मात्रं ज्ञानं जायते। तत्रापीन्द्रियमनसोः सापेक्षत्वं वर्तते। एतादृशं ज्ञानं मति-श्रुतावधि-मनः-



CC-0. Sampurnanand University Collection. Digitized by eGangotri

पर्ययभेदाच्चतुर्धा भवति। एवं प्रकारेण ज्ञानस्य पञ्चभेदा भवन्ति–(१) मतिज्ञानम्, (२) श्रुतज्ञानम्, (३) अवधिज्ञानम्, (४) मनःपर्ययज्ञानम्, (५) केवलज्ञानं चेति[1]।

कुन्दकुन्दाचार्येण नियमसारे तथा चान्यग्रन्थेषु केवलज्ञानस्य विशेषतो विवेचनं कृतम्। आत्ममात्रसापेक्षत्वात् केवलज्ञानं प्रत्यक्षं कथ्यते। तदेव सकलप्रत्यक्षं पारमार्थिकप्रत्यक्षमपि कथ्यते। मतिज्ञानं श्रुतज्ञानं च परोक्षज्ञानम्। अवधि-मनःपर्ययौ विकलप्रत्यक्षम्।

प्राचीनजैनसिद्धान्तपरम्परायां ज्ञानस्य प्रत्यक्ष-परोक्षरूपेणैतेषां ज्ञानानां विस्तरेण विमर्शोऽस्ति। उत्तरकाल एतेषां प्रमाणरूपेण विवेचनं दृश्यते। अथ कुन्दकुन्दानुसारेण सम्यग्ज्ञानस्य विमर्शः क्रियते।

**सम्यग्ज्ञानस्य स्वरूपम्—**

कुन्दकुन्दाचार्येण विभिन्नग्रन्थेषु सम्यग्ज्ञानस्य स्वरूपं वक्ष्यमाणरूपेण प्रतिपादितम्।

नियमसारग्रन्थे यथा—

(१) "संसयविमोहविब्भमविवज्जियं होदि सण्णाणं[2]"।

तथा—

(२) "अधिगमभावो णाणं हेयोवादेयतच्चाणं[3]"।

अयं भावः—सम्यग्ज्ञानं संशय-विमोह-विभ्रमविवर्जितं भवति। तत्र संशयस्तावज्जिनो वा शिवो वा देव इति संशयरहितं ज्ञानं सम्यग्ज्ञानं कथ्यते। शाक्यादिकथितवस्तुनि निश्चयो विमोहः। अज्ञानत्वमेव विभ्रमो वर्तते। एतेन रहितं ज्ञानं सम्यग्ज्ञानं भवति। चारित्रप्राभृते तथा मोक्षप्राभृते यथा—

"जं जाणइ तं णाणं[4]" अर्थाद् यज्जानाति तज्ज्ञानम्।

---

१. केवलमिंदियरहियं असहायं तं सहावणाणं ति।
सण्णाणिदरवियप्पे विहावणाणं हवे दुविहं॥
सण्णाणं च उभेयं मदिसुदओही तहेव मणपज्जं।
अण्णाणं तिवियप्पं मदियाई भेददो चेव॥ (नि० सा०, गा० ११–१२)
आभिणिसुदोधिमणकेवला णि णाणाणि पञ्चभेयाणि।
कुमदिसुदविभंगाणि य तिण्णि वि णाणेहिं संजुत्तो॥ (पंचा० गा० ४१)

२. नि० सा०, गा० ५१; ३. तत्रैव, गा० ५२।

४. चारित्रप्राभृतम्, गा० ३, मोक्षप्राभृतम्, गा० ३७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अथानन्तरं कथितं यज्जिनवरैर्भव्यजनबोधनार्थं जिनमार्गे ज्ञानं भणितं तं ज्ञानस्वरूपमात्मानं विजानीहि[१]।

भावप्राभृते यथा—आत्मना आत्मनो ज्ञानं संज्ञानम्[२]। संज्ञानमेव निश्चयनयेन सम्यग्ज्ञानं भवति।

प्रवचनसारग्रन्थे यथा—यो द्रव्यत्वगुणत्वपर्यायत्वैरर्हन्तं जानाति, स आत्मानं जानाति, तस्य मोहो लयं याति[३]। अयं भावः—यः कर्ता द्रव्यत्वगुणत्वपर्यायत्वैरर्हन्तं जानाति, स पुरुषोऽर्हत्परिज्ञानात्पश्चादात्मानं जानाति तदात्मपरिज्ञानात् तस्य मोहो दर्शनमोहो लयं विनाशं याति। केवलज्ञानादयो विशेषगुणाः, अस्तित्वादयः सामान्यगुणाः, परमौदारिकशरीराकारेण यदात्मप्रदेशानामवस्थानं स व्यञ्जनपर्यायः, अगुरुलघुकगुणषड्वृद्धिहानिरूपेण प्रतिक्षणं प्रवर्तमाना अर्थपर्यायाः, एवं लक्षणगुणपर्यायाधारभूतममूर्तमसंख्यातप्रदेशं शुद्धचैतन्यान्वयरूपं द्रव्यं चेति, इत्थंभूतं द्रव्यगुणपर्यायस्वरूपं पूर्वमर्हदभिधाने परमात्मनि ज्ञात्वा पश्चान्निश्चयनयेन निजशुद्धात्मभावनाभिमुखरूपेण सविकल्पस्वसंवेदनज्ञानेन प्रवृत्तिकरणानिवृत्तिकरणसंज्ञदर्शनमोहक्षपगसमर्थपरिणामविशेषबलेन पश्चादात्मनि योजयति। तदनन्तरमविकल्पस्वरूपे प्राप्ते, यथा पर्यायस्थानीयमुक्ताफलानि गुणस्थानीयं धवलत्वं चाभेदनयेन हार एव, तथा पूर्वोक्तगुणपर्यायोऽभेदनयेनात्मैवेति भावयतो दर्शनमोहान्धकारः प्रलीयते। रयणसारग्रन्थे कथितं यद् यः परसमयस्वसमयादिविभेदं द्रव्यगुणपर्यायैर्जानाति, स आत्मान जानातिः तथा शिवपथनायको भवति[४]। बारसअणुवक्खाग्रन्थे यथा—कर्मोदयजपर्याया हेया, क्षायोपशमिकज्ञानं स्वकद्रव्यं खलूपादेयमिति निश्चितिः सद्ज्ञानं भवति[५]। कर्मोदयोत्पन्नकारणनिमित्तपर्याया हेयास्त्याज्यास्तथा च क्षायोपशमिकज्ञानं कर्मक्षयकारणनिमित्तज्ञानं स्वकद्रव्यम्—"दुष्टाष्टकर्मरहितमनुपमज्ञानविग्रहं नित्य आत्मा स्वद्रव्यं भवति" इति जिनैः कथितम्[६]"। खलु निश्चयेनोपादेयं ग्राह्यमिति निश्चितिः, एवं निश्चयीकरणं सज्ज्ञानं सम्यग्ज्ञानं भवति।

---

१. भव्वजणबोहणत्थं जिणमग्गे जिणवरेहिं जह भणियं।
णाणं णाणसरूवं अप्पाणं तं वियाणेहि॥ (चारित्रप्राभृतम्, गा० ३७)

२. भावप्राभृतम्, गा० ३१।

३. जो जाणदि अरहंतं दव्वत्तगुणत्तपज्जयत्तेहिं।
सो जाणदि अप्पाणं मोहो खलु जादि तस्स लयं॥ (प्रव० सा०, ज्ञा०, गा० ८०)

४. दव्वगुणपज्जएहिं जाणइ परसमयससमयादिविभेयं।
अप्पाणं जाणइ सो सिवगइपहणायगो होई॥ (रयणसारः, गा० १४७)

५. कम्मुदयपज्जाया हेयं खाओवसमियणाणं खु।
सगदव्वमुवादेयं णिच्छित्ति होदि सण्णाणं॥ (बारस अणुवेक्खा–८४)

६. मोक्षप्राभृतम, गा० १८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

"तच्चरगगहणं च हवइ सण्णाणं[१]"। तत्त्वग्रहणं च सम्यग्ज्ञानं भवतीत्याशयः। "जीवाजीवविभत्ती जो जाणइ सो हवेइ सण्णाणो[२]"। जीवाजीवविभक्तिं यो जानाति, स सज्ज्ञानी भवेत्। योगी जिनवरमतेन जीवाजीवविभक्ति जानाति सर्वदर्शिभिस्तदवितथं सम्यग्ज्ञानं भणितम्[३]। शीलप्राभृते त्वर्हति शुभभक्तिः, दर्शनेन सुविशुद्धं सम्यक्त्वम्, विषयविरागस्तथा च शीलमेव सम्यग्ज्ञानं कथितमस्ति[४]। स्वामिकार्तिकेयानुप्रेक्षायां तु नानाधर्मैर्युतमात्मानं तथा स्वयोग्यं परमपि निश्चयतो जानाति, तज्ज्ञानं भण्यते[५]। निश्चयतः परमार्थतो यत् स्वयोग्यं सम्बन्धं वर्तमानमभिमुखमात्मानं जीवादिद्रव्यं स्वस्वरूपं वा तथा परमपि परद्रव्यमपि चेतनाचेतनादिकं वस्तु यज्जानाति वेत्ति पश्यति समये जिनसिद्धान्ते तज्ज्ञानं भण्यते। समन्तभद्राचार्येण सम्यग्ज्ञानस्य स्वरूपं निम्नप्रकारेण प्रतिपादितम्—

यदर्थम् अन्यूनमनतिरिक्तं याथातथ्यं विपरीताद् विना निःसन्देहं च वेत्ति, तदागमिनो ज्ञानमाहुः[६]। हीनाधिकतारहितं यथार्थज्ञानं सम्यग्ज्ञानं भवतीति तदाशयः।

**कर्मसिद्धान्तानुसारं सम्यग्ज्ञानम्—**

कर्मसिद्धान्तानुसारेण ज्ञानावरणीयकर्म जीवस्य ज्ञस्वभावमावृणोति। यथा यथा ज्ञानावरणीयकर्मणः क्षयः, उपशमः, क्षयोपशमो वा जायते, तथा तथा जीवस्य ज्ञानावरणं क्षीयते ज्ञस्वभावश्च प्रस्फुटति।

ज्ञानावरणीयस्य पञ्च प्रकृतयो भवन्ति। तद्यथा—(१) आभिनिबोधिकज्ञानावरणीयम्, (२) श्रुतज्ञानावरणीयम्, (३) अवधिज्ञानावरणीयम्, (४) मनःपर्ययज्ञानावरणीयम्, (५) केवलज्ञानावरणीयं चेति। तथा चोक्तं षट्खण्डागमे--"णाणावरणीयस्स कम्मस्स पंच पयडीओ-आभिणिबोहियणाणावरणीयं सुदणाणावरणीयं ओहिणाणावरणीयं मणपज्जवणाणावरणीयं केवलणाणावरणीयं चेदि[७]"।

---

१. मो० प्रा० गा० ३८; २. चारित्रप्राभृतम्, गा० ३८।

३. जीवाजीवविहत्ती जोई जाणेइ जिणवरमयेण।
तं सण्णाणं भणियं अवियत्थं सव्वदरिसीहिं॥ (मोक्षप्राभृतम्—४१)

४. अरहंते सुहभत्ती सम्मत्तं दंसणेण सुविसुद्धं।
शीलं विसयविरागो णाणं पुण केरिसं भणियं॥ (शीलप्राभृतम्—४०)

५ णाणा-धम्मेहिं जुदं अप्पाणं तह परं पि णिच्छयदो।
जं जाणेदि सजोगं तं णाणं भण्णदे समए॥ (कार्तिकेयानुप्रेक्षा, गा० २५३)

६. अन्यूनमनतिरिक्तं याथातथ्यं विना च विपरीतात्।
निःसन्देहं वेद यदाहुस्तज्ज्ञानमागमिनः॥ (रत्न० श्रा० २।१)

७. षट्खण्डा० १३।५।५, सू० २१।२०९।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आभिनिबोधिकज्ञानावरणीयं जीवस्य आभिनिबोधिकज्ञानमावृणोति। तदावरणे मतिज्ञानं न जायते। अस्याः कर्मप्रकृतेः संख्येया असंख्येयाश्चोत्तरप्रकृतयो भवन्ति[1]। एतासां प्रकृतीनां यावन्मात्रं क्षयोपशमो भवति, तावन्मात्रं मतिज्ञानं जायते। इदं मतिज्ञानं क्षयोपशमानुसारेण सम्यग् मिथ्या वा भवति।

श्रुतज्ञानावरणीयं जीवस्य श्रुतज्ञानमावृणोति। अस्योदये श्रुतज्ञानं न जायते। श्रुतज्ञानावरणीयस्य संख्याता असंख्याताश्च उत्तरप्रकृतयो भवन्ति[2]। एतासां क्षयोपशमानुसारेण श्रुतज्ञानं जायते।

अवधिज्ञानावरणीयं जीवस्य अवधिज्ञानस्याऽऽवरणं करोति। अस्याः कर्मप्रकृतेरसंख्याता उत्तरप्रकृतयो भवन्ति[3]। एतासु यावत्यः प्रकृतयः क्षयोपशमं यान्ति, तावन्मात्रमवधिज्ञानं जायते।

मनःपर्ययज्ञानावरणीयस्योदये जीवस्य मनःपर्ययज्ञानं न भवति। अस्याः कर्मप्रकृतेः संख्याता असंख्याताश्चोत्तरप्रकृतयो भवन्ति[4]। एतासां क्षयोपशमे मनःपर्ययज्ञानं जायते।

केवलज्ञानावरणीयकर्मण उदये केवलज्ञानं न भवति। अस्यैकैव प्रकृतिः। तद्यथा—"केवलणाणावरणीयस्स कम्मस्स एया चेव पयडी[5]"। ज्ञानावरणकर्मणः सम्पूर्णक्षयः केवलज्ञानावरणीयक्षयः। अनेन सम्पूर्णरूपत आवरणस्य क्षये सति जीवस्य ज्ञस्वभावो निरावृतो भवति। एतदेव केवलज्ञानम्। सति केवलज्ञाने जीवः सर्वज्ञो जायते।

**केवलज्ञानस्य लक्षणम्—**

केवलोऽसहायः केवलज्ञानमयो वा के परब्रह्मणि निजशुद्धबुद्धैकस्वभाव आत्मनि बलमनन्तवीर्यं यस्य भवति, स केवलः, अथवा केवते सेवते निजात्मन्येव लोलीभावेन तिष्ठतीति केवलः। केवलं ज्ञानमेव तत् केवलज्ञानम्। इदं ज्ञानस्य स्वाभाविकं विशुद्धं च परिणमनं वर्तते। अत एव स्वभावज्ञानमपि कथ्यते।

---

१ षड्खण्डा० १३।५।५, सू० ३५।२३४।

२ तत्रैव, १३।५।५, सू० ४४,४५, ४८।२४७, २६०।

३. ओहिणाणावरणीयस्स कम्मस्स असंखेज्जाओ पयडीओ।
(तत्रैव—१३।५।५, सू० ५२।२८९)

४. मणपज्जवणाणावरणीयपयडीओ असंखेज्जकप्पमेत्ताओ।
(तत्रैव—१२।४।२, १५।४।५०२।३)

५. तत्रैव—१३।५।५, सू० ८०।३४५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वभावज्ञानममूर्तम्, अव्याबाधम्, अतीन्द्रियमविनश्वरं चास्ति । तत् स्वभावज्ञानं कार्यकारणभेदेन द्विविधं भवति । सकलविमलकेवलज्ञानं कार्यं स्वभावज्ञानम् । परमपारिणामिकभावस्थितत्रिकालनिरुपाधिरूपं सहजज्ञानं कारणस्वभावज्ञानं स्यात् । सहजज्ञानं शुद्धान्तस्तत्त्वपरमतत्त्वव्यापकत्वात् स्वरूपप्रत्यक्षं भवति । केवलज्ञानं सकलप्रत्यक्षं भवति । नियमसारे केवलज्ञानस्य लक्षणमेवं कथितम् । तद्यथा--मूर्त्तममूर्त्तं चेतनमितरद् द्रव्यं स्वकं तथा सर्वं पश्यतो ज्ञानमतीन्द्रियं प्रत्यक्षं केवलज्ञानं वा भवति[1] ।

षण्णां द्रव्याणां मध्ये मूर्तः पुद्गलः, शेषास्त्वमूर्ताः । चेतनत्वं जीवस्यैव पञ्चानामचेतनत्वम् । मूर्तामूर्तचेतनाचेतनस्वद्रव्यादिकमशेषं त्रिकालविषयं योऽनवरतं जानाति, तस्य क्रमकरणव्यवधानरहितमतीन्द्रियं च सकलविमलकेवलज्ञानं सकलप्रत्यक्षं भवति । तथा मोक्षप्राभृते कथितं यत् सिद्धः शुद्ध आत्मा सर्वज्ञः सर्वलोकदर्शी च स केवलज्ञानं जिनवरैर्भणितः[2]। सिद्ध आत्मोपलब्धिमान्, शुद्धः कर्ममलकलङ्करहित ईदृग्विध आत्माऽतति समयैकेनोर्ध्वं व्रज्यास्वभावेन त्रिभुवनाग्रं गच्छतीत्यात्मा शुद्धबुद्धैकस्वभावस्तमात्मस्वभावम् । यः सर्वज्ञस्त्रैलोक्यालोकस्वरूपज्ञापकः सर्वलोकदर्शी च तेन सर्वशब्देनालोकाकाशो लभ्यते लोकशब्देन षड्द्रव्याधारवत्त्रिभुवनमुच्यते तद्द्रयं द्रष्टुमवलोकयितुं शीलमस्येति सर्वलोकदर्शी । चकारेणानन्तवीर्यानन्तसौख्यवदादिकोऽनन्तगुणो गृह्यते । स एवं गुणविशिष्ट आत्मा जिनवरैस्तीर्थङ्करपरमदेवैः केवलं ज्ञानं भणित इति त्वं जानीहि ।

प्रवचनसारग्रन्थे केवलज्ञानस्य लक्षणं प्रतिपादितम् । तद्यथा—यज्ज्ञानं सप्रदेशम्, अप्रदेशम्, मूर्तम्, अमूर्तम्, अजातं पर्यायम्, प्रलयं गतं पर्यायं च जानाति, तज्ज्ञानमतीन्द्रियं भणितम्[3]। इन्द्रियसापेक्षरहितं वा ज्ञानमतीन्द्रियज्ञानं कथ्यते ।

य इन्द्रियज्ञानं मानसज्ञानं च त्यक्त्वा निर्विकल्पकसमाधिस्वरूपस्वसंवेदनज्ञाने समस्तविभावपरिणामत्यागेन रतिं कुर्वन्ति, त एव परमसुखस्वभावमतीन्द्रियज्ञानं सर्वज्ञपदं च प्राप्नुवन्ति ।

---

१ मुत्तममुत्तं दव्वं चेयणमियर सगं च सव्वं च ।
पेच्छंतस्स दु णाणं पच्चक्खमणिंदियं होइ ।। (नि० सा०, गा० १६७)

२. सिद्धो सुद्धो आदा सव्वण्हू सव्वलोयदरसी य ।
सो जिणवरेहिं भणियो जाण तुमं केवलं णाणं ।। (मोक्षप्राभृतम्, गा० ३५)

३. अपदेसं सपदेसं मुत्तममुत्तं च पज्जयमजादं ।
पलयं गदं च जाणदि तं णाणमणिंदियं भणियं ।। (प्र० सा०, गा० ४१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**क्षायिकज्ञानम् —**

यज्ज्ञानं ज्ञानावरणीयकर्मणः क्षयेण प्रादुर्भवति, तज्ज्ञानं क्षायिकज्ञानं कथ्यते। इदं ज्ञानं सर्वान् पदार्थान् युगपज्जानाति। इन्द्रियसाहाय्येन विनेदं सर्वं जानाति, अतोऽतीन्द्रियमपि कथ्यते।

प्रवचनसारग्रन्थे क्षायिकज्ञानमेवं प्रतिपादितम्। तद्यथा—

"जं तक्कालियमिदरं जाणदि जुगवं समंतदो सव्वं।
अत्थ विचित्तविसयं तं णाणं खाइयं भणियं[1]" ॥

अयं तात्पर्यार्थः—यज्ज्ञानं सर्वप्रकारेण वर्तमानमितरच्चातीतानागतं मूर्तामूर्त-चेतनाचेतनादिजात्यन्तरविशेषैर्विसदृशं नानाभेदभिन्नं सर्वं सदार्थं जानाति, तज्ज्ञानं क्षायिकं भवति। तदेवाभेदनयेन सर्वज्ञस्वरूपं भवति। तदेवोपादेयभूतमनन्तसुखादि-नानागुणानामाधारभूतं सर्वप्रकारेणोपादेयरूपेण भावनीयमिति। स्वामिकार्तिकेयानु-प्रेक्षाग्रन्थे—यत् सर्वमपि द्रव्यपर्यायसंयुतं लोकं तथा सर्वमलोकं प्रकाशयति, तज्ज्ञानं सर्वप्रत्यक्षम्[2]। तज्ज्ञानं सर्वप्रत्यक्षं सर्वं लोकालोकं प्रत्यक्षेण पश्यतीत्यर्थः। तत् किम्? यत्सर्वमपि लोकं त्रिचत्वारिंशदधिकत्रिशद्रज्जुप्रमाणं जगत् त्रैलोक्यम्। तथा सर्वम-लोकम्, अनन्तानन्तप्रमितमलोकाकाशं प्रकाशयति जानाति पश्यतीत्यर्थः। कथंभूतं लोकम्? द्रव्यपर्यायसंयुक्तम्। लोकाकाशे जीव-पुद्गल-धर्माधर्माकाश-कालद्रव्याणि, तेषां नरनारकादिद्व्यणुकादिस्कन्धादिपर्यायाः। अलोकाकाशेऽलोकाकाशं द्रव्यं तस्य पर्याया अगुरुलघ्वादय उत्पादव्ययध्रौव्यादयश्च तैः संयुक्तं जानाति पश्यति च, "सर्वद्रव्यपर्यायेषु केवलस्य" इति वचनात्। पञ्चसंग्रहग्रन्थेऽपि केवलज्ञानस्य लक्षणं प्रतिपादितं यत् सम्पूर्णं समग्रं केवलं सम्पन्नं सर्वभावगतं लोकालोकवितिमिरं च केवल-ज्ञानं मन्तव्यम्[3]। केवलज्ञानं सम्पूर्णं समग्रं केवलं प्रतिपक्षरहितं सर्वपदार्थगतं लोका-लोकविषयेऽन्धकाररहितं च ज्ञातव्यम्। इदं ज्ञानं समस्तपदार्थानां विषयकम्। तथा जीवद्रव्यस्य ज्ञानशक्तेर्निखिलांशव्यक्तत्वात् सम्पूर्णम्। मोहनीयकर्मणो ज्ञानेनावरणीयस्य च सर्वथाक्षयादप्रतिहतशक्तियुक्तत्वात् समग्रम्। इन्द्रियाणां साहाय्येन निरपेक्षत्वात् केवलम्। समस्तपदार्थानां विषयकरमबाधकत्वात् सर्वभावगतम्।

---

१. प्रव० सा०, ज्ञा०, गा० ४७।

२. जं सव्वं पि पयासादि दव्व—पज्जाय-संजुदं लोयं।
तह य अलोयं सव्वं तं णाणं सव्व-पच्चक्ख ॥ (कार्त्तिके, गा० २५८)

३. सम्पुण्णं तु समग्गं केवलमसवत्तं सव्वभावगयं।
लोयालोयवितिमिरं केवलणाणं मुणेदव्वं ॥
( पंचसंग्रह, प्रा० १।१२६, गो०जी० ४६० )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**ज्ञानं जीवस्वरूपम्—**

ज्ञानं जीवस्वरूपं भवति तस्मादात्माऽऽत्मानं जानाति । यद्यात्मानं न जानाति, तर्ह्यात्मनो व्यतिरिक्तं भवति[1] । ज्ञानं जीवस्वरूपं भवति, अतो हेतोरखण्डाद्वैतस्वभावनिरतं निरतिशयपरमभावनासनाथं मुक्तिसुन्दरीनाथं बहिर्व्यावृत्तकौतूहलं निजपरमात्मानं जानाति कश्चिदात्मा भव्यजीव इति । अयं खलु स्वभाववादः । अस्माद् विपरीतो वितर्कः, स खलु विभाववाद इति । पूर्वोक्तस्वरूपमात्मानं खलु न जानात्यात्मा, स्वरूपावस्थितः संतिष्ठते । यथोष्णस्वरूपस्याग्नेः स्वरूपमग्निः किं जानाति, तथैव ज्ञानज्ञेयविकल्पाभावात् सोऽयमात्मनि तिष्ठति । अग्निवदात्मा किमचेतनः ? तमात्मानं ज्ञानं न जानाति चेद् देवदत्तरहितपरशुवदिदं नार्थक्रियाकारि सिद्ध्यति, अत एवाऽऽत्मनः सकाशाद् व्यतिरिक्तं भवति । तथा चोक्तम्—

ज्ञानं तावद् भवति सुतरां शुद्धजीवस्वरूपं
स्वात्मामात्रं नियतमधुना तेन जानाति चैकम् ।
तच्च ज्ञानं स्फुटितसहजावस्थयात्मानमाराद्
नो जानाति स्फुटितमविचलाद्भिन्नमात्मस्वरूपात्[2] ॥

**आत्मज्ञानयोरभेदः—**

आत्मा सकलपरद्रव्यपराङ्मुखः स्वस्वरूपपरिच्छित्तिसमर्थः सहजज्ञानस्वरूपश्च वर्तते । स आत्मैव ज्ञानम्[3]। ज्ञानमात्मा भवतीति कथितम् । ज्ञानं कर्तृ विनात्मानं जीवमन्यत्र घटपटादौ न वर्तते । तस्माज्ज्ञायते यज्ज्ञानं कथञ्चिदात्मैव स्यात् । आत्मा ज्ञानधर्मद्वारेण ज्ञानं भवति, सुखवीर्यादिना धर्मद्वारेणान्यद् वा भवति[4] । यद्येकान्तेन ज्ञानमात्मेति भण्यते तदा ज्ञानगुणमात्र एवात्मा प्राप्तः सुखादिधर्माणामवकाशो नास्ति । तथा सुखवीर्यादिधर्मसमूहाभावादात्माऽभावः । आत्मन आधारभूतस्याभावाद् आधेयभूतस्य ज्ञानगुणस्याप्यभावो भवतीत्येकान्ते सति ज्ञानात्मनोऽभावो जायते । तस्मात् कथञ्चिद् ज्ञान आत्मा न सर्वथा इति ज्ञातव्यम् । आत्मा व्यापको ज्ञानं व्याप्यम् ।

---

१. णाणं जीवसरूवं तम्हा जाणेइ अप्पगं अप्पा ।
अप्पाण ण वि जाणदि अप्पादो होदि विदिरित्तं ॥ (नि० सा०, गा० १७०)

२. नि० सा० टी०, श्लो० २८६, पृ० ३४४ ।

३. अप्पाणं विणु णाणं णाणं विणु अप्पगो ण संदेहो ।
तम्हा सपरपयासं णाणं तह दंसणं होदि ॥ (नि० सा०, गा० १७१)

४. णाणं अप्पत्ति मदं वट्टदि णाणं विणा ण अप्पाणं ।
तह्मा णाणं अप्पा अप्पा णाणं व अण्णं वा ॥ (प्रव० सा०, ज्ञा०, गा० २७)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ततो ज्ञानमात्मा स्यात् । तथैवाऽऽत्मा तु ज्ञानमन्यद् वा भवतीति । यो जानाति, स ज्ञानं वर्तते । ज्ञानेनाऽऽत्मा ज्ञायको न भवति; किन्तु ज्ञानं परिणमते । सर्वे पदार्था ज्ञान-स्थिता भवन्ति[१] ।

यथा संज्ञालक्षणप्रयोजनादिभेदेऽप्यभेदभयेन दहनक्रियासमर्थोष्णगुणेन परि-णतोऽग्निरप्युष्णो भण्यते, तथैवार्थक्रियापरिच्छित्तिसमर्थेन ज्ञानगुणेन परिणत आत्मापि ज्ञानं भण्यते । यथा भिन्नदात्रेण लावको भवति देवदत्तः, तथा भिन्नज्ञानेन ज्ञायको भवतु, को दोष इति ? नैष दोषः । छेदनक्रियाविषये दात्रं बहिरङ्गोपकरणं तद्भिन्नं भवतु, अभ्यन्तरोपकरणं देवदत्तस्य छेदनक्रियाविषये शक्तिविशेषस्तद्भिन्नमेव भवति । उपाध्यायप्रकाशादिबहिरङ्गोपकरणं तद्भिन्नमपि भवतु, अत एव दोषो नास्ति । यदि भिन्नज्ञानेन ज्ञानी भवति, तर्हि परकीयज्ञानेन सर्वेऽपि कुम्भ-स्तम्भादिजडपदार्था ज्ञ निनो भवन्तु, न च तथा । यत एव भिन्नज्ञानेन ज्ञानो भवति, तत एव घटोत्पत्तौ मृत्पिण्ड इव स्वयमेवोपादानरूपेणाऽऽत्मा ज्ञानं परिणमते । व्यवहारेण ज्ञेयपदार्था आदर्शे प्रतिबिम्बमिव परिच्छित्त्याकारेण ज्ञाने तिष्ठन्ति ।

**ज्ञानं युगपज्जानाति —**

लोकालोकव्यापिनां सकलपदार्थानां तेषां पर्यायाणां च केवलज्ञानी युगपज्जानाति । केवलज्ञान एतेषां प्रतिभासनं दर्पण इव भवति । केवलज्ञानिनो ज्ञानं तथा दर्शनं दिनकरप्रकाशतापवद् युगपद् वर्तते[२] । यथा क्वचित् काले वलाहकप्रक्षोभा-भावे विद्यमाने नभस्स्थलस्य मध्यगतस्य सहस्रकिरणस्य प्रकाशतापौ युगपद् वर्तेते, तथैव केवलज्ञानिजीवस्य जगत्त्रयकालत्रयवर्तिषु स्थावरजङ्गमद्रव्यगुणपर्यायात्मकेषु ज्ञेयेषु सकलविमलकेवलज्ञानकेवलदर्शने च युगपद् वर्तेते; किन्तु संसारिणां दर्शनपूर्वकमेव ज्ञानं भवतीति । कुन्दकुन्दाचार्येण प्रवचनसारेऽतीन्द्रियज्ञानं विस्तरेण विमर्शितम् । तेन कथितं यद् यदाऽऽत्मा केवलज्ञानरूपेण परिणमते, तदा सर्वाणि द्रव्याणि तेषां सर्वे पर्यायाश्च तस्य प्रत्यक्षीभवन्ति । स तानि द्रव्याणि तेषां पर्यायाश्चावग्रहादिभिः क्रियाभिर्न जानाति; किन्तु युगपज्जानाति[३] ।

---

१. जो जाणदि सो णाणं ण हवदि णाणेण जाणगो आदा ।
णाणं परिणमदि सयं अट्ठा णाणट्ठिया सव्वे ।। (प्र० सा०, ज्ञा०, गा० ३५)

२. जुगवं वट्टइ णाणं केवलणाणिस्स दंसणं च तहा ।
दिणयरपयासतावं जह वट्टइ तह मुणेयव्वं ।। (नि० सा०, गा० १६०)

३ परिणमदो खलु णाणं पच्चक्खा सव्वदव्वपज्जाया ।
सो णेव ते विजाणदि ओग्गहपुव्वाहिं किरियाहिं ।। (प्र० सा०, ज्ञा०, गा० २१)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनाद्यनन्तहेतुकं चिदानन्दैकस्वभावं निजशुद्धात्मानमुपादेयं कृत्वा केवलज्ञानोत्पत्तेर्बीजभूतेनाऽऽगमभाषया शुक्लध्यानसंज्ञेन रागादिविकल्पजालरहितेन स्वसंवेदनज्ञानेन यदाऽयमात्मा परिणमते, तदा स्वसंवेदनज्ञानफलभूतस्य केवलज्ञान-परिच्छित्याकारपरिणतस्य तस्मिन्नेव क्षणे क्रमप्रवृत्तक्षायोपशमिकज्ञानाभावादक्रमसमाक्रान्तसमस्तद्रव्यक्षेत्रकालभावतया सर्वद्रव्यगुणपर्याया आत्मनः प्रत्यक्षा भवन्ति। अत एवाऽऽत्मनः सर्वं प्रत्यक्षं भवति, न किञ्चिदपि परोक्षम् । तस्याक्षातीतस्य समन्ततः सर्वाक्षगुणसमृद्धस्य स्वयमेव हि केवलज्ञानरूपेण परिणतस्येति[१] ।

अतीन्द्रियस्वभावपरमात्मनो विपरीतानि क्रमप्रवृत्तिहेतुभूतानीन्द्रियाण्यतिक्रान्तस्य जगत्त्रय-कालत्रयवर्तिसमस्तपदार्थयुगपत्प्रत्यक्षप्रतीतिसमर्थमविनश्वरम्, अखण्डैकभासमयं केवलज्ञानं परिणतस्य तस्य भगवतः किमपि परोक्षं नास्तीत्यर्थः।

**ज्ञानस्य स्वपरप्रकाशकत्वम्—**

ज्ञानं परप्रकाशम्, दृष्टिरात्मप्रकाशिकैव, आत्मा स्वपरप्रकाशो भवति, यद्येवं खलु मन्यसे, तर्हि विरोधो जायते। ज्ञानं परप्रकाशं तदा ज्ञानेन दर्शनं भिन्नं भविष्यति। दर्शनं परद्रव्यगतं न भवतीति। आत्मा परप्रकाशस्तदाऽऽत्मना दर्शनं भिन्नं सिद्धयति। यतो दर्शनं परद्रव्यगतं न भवतीति[२] ।

तद्यथा—ज्ञानदर्शनादिविशेषगुणसमृद्ध आत्मा भवति। तस्य ज्ञानं शुद्धात्मप्रकाशकासमर्थत्वात् परप्रकाशकमेव। एवं दृष्टिर्निरंकुशा केवलमभ्यन्तरे ह्यात्मानं प्रकाशयति चेदनेन विधिना स्वपरप्रकाशक आत्मेति चेन्न युक्तम्। अथ ह्यविरुद्धा स्याद्वादविद्यादेवता समभ्यर्चनीया सद्भिरनवरतम्। तत्रैकान्ततो ज्ञानस्य परप्रकाशकत्वं न समस्ति। न केवलं स्यान्मते दर्शनमपि शुद्धात्मानं पश्यति। दर्शनज्ञानप्रभृत्यनेकधर्माणामाधार आत्मा वर्तते। व्यवहारपक्षेऽपि केवलं परप्रकाशकस्य ज्ञानस्य न चात्मसम्बन्धः, सदा बहिरवस्थत्वात्, आत्मप्रतिपत्तेरभावान्न सर्वगतत्वमित्यस्मात्

१. णत्थि परोक्खं किंचिवि समंत सव्वक्खगुणसमिद्धस्य।
अक्खातीदस्स सदा सयमेव हि णाणजादस्स॥—(प्र० सा०, ज्ञा० २२)

२. णाणं परप्पयासं दिट्ठी अप्पप्पयासया चेव।
अप्पा सपरपयासो होदि त्ति हि मण्णसे जदि हि॥
णाणं परप्पयासं तइया णाणेण दंसणं भिण्णं।
ण हवदि परदव्वगयं दंसण मिदि वण्णिदं तम्हा॥
अप्पा परप्पयासो तइया अप्पेण दंसणं भिण्णं।
ण हवदि परदव्वगयं दंसणमिदि वण्णिदं तम्हा॥ (नि० सा०, गा०, १६१-१६३)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कारणादिदं ज्ञानं न भवति, मृगतृष्णाजलवत् प्रतिभासमात्रमेव। दर्शनपक्षेऽपि तथा न केवलमाभ्यन्तरप्रतिपत्तिकारणं दर्शनं भवति। सदैव सर्वं पश्यति हि चक्षुः, स्वस्याभ्यन्तरस्थितामेव कनीनिकां न पश्यति। अतः स्वपरप्रकाशकत्वं ज्ञानदर्शनयोरविरुद्धमेव। ततः स्वपरप्रकाशक आत्मा ज्ञानदर्शनलक्षणो भवतीति। ज्ञानदर्शनयोः स्वपरप्रकाशकत्वविषये पद्मप्रभमलधारिदेवेनाप्युक्तम्। तद्यथा—

ज्ञानं तावत् सहजपरमात्मानमेकं विदित्वा
लोकालोकौ प्रकटयति वा तद्गतं ज्ञेयजालम्।
दृष्टिः साक्षात् स्वपरविषया क्षायिकी नित्यशुद्धा
ताभ्यां देवः स्वपरविषये बोधति ज्ञेयराशिम्[1]॥

ज्ञानं केवलं परप्रकाशकं चेत्, परप्रकाशकगुणप्रधानेनानेन ज्ञानेन दर्शनं भिन्नमेव भविष्यति। परप्रकाशस्य ज्ञानस्याऽऽत्मप्रकाशकस्य दर्शनस्य च कथं सम्बन्ध इति चेत्, सह्याचल-विन्ध्याचलयोरिव। आत्मनिष्ठ यत् तद् दर्शनमस्त्येव, निराधारत्वात् तस्य ज्ञानस्य शून्यतापत्तिरेव। अथवा तदेव ज्ञानं केवलं न परप्रकाशकमित्युच्येत, तर्हि दर्शनमपि न केवलमात्मगतमित्युक्तम्। ततः खल्विदमेव समाधानं सिद्धान्तहृदयं ज्ञानदर्शनयोः कथञ्चिद् स्वपरप्रकाशत्वमस्त्येवेति। अत एव ज्ञानाद् दर्शनं न भिन्नम्। तथा चोक्तम्—

आत्मा ज्ञानं भवति न हि वा दर्शनं चैव तद्वत्
ताभ्यां युक्तः स्वपरविषयं वेत्ति पश्यत्यवश्यम्।
संज्ञाभेदादघकुलहरे चात्मनि ज्ञानदृष्ट्यो-
र्भेदो जातो न खलु परमार्थेन वह्नावुष्णवत्सः[2]॥

आत्मा केवलं परप्रकाशकश्चेत् तत् तथैव प्रत्यादिष्टम्, भावभाववतोरेकास्तित्वनिर्वृत्तत्वात्। आत्मनः परप्रकाशकत्वे सति तेनैव दर्शनं भिन्नमित्यवसेयम्। अपि चात्मा न परद्रव्यगत इति चेत् तद्दर्शनमप्यभिन्नमित्यवसेयम्। अत एवात्मा स्वपरप्रकाशक इति। यथा कथञ्चित् स्वपरप्रकाशकत्वं ज्ञानस्य साधितम्, तथाप्यात्मनोऽपि ज्ञातव्यम्, धर्मधर्मिणोरेकस्वरूपत्वात् पावकोष्णवदिति।

व्यवहारनयेन ज्ञानं परप्रकाशं भवति, तस्माद् दर्शनमपि परप्रकाशकम्। तथैवात्मा परप्रकाशकस्तस्माद् दर्शनमपि परप्रकाशकं भवति[3]। व्यवहारनयेन सकल-

१. नि० सा० टी०, श्लो० २७७।
२. नि० सा०, टी०, श्लो० २७८।
३. णाणं परप्पयासं ववहारणएण दंसणं तम्हा।
अप्पा परप्पयासो ववहारणएण दंसणं तम्हा॥ (नि० सा०, गा० १६४)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कर्मक्षयप्रादुर्भावासादितस्य सकलविमलकेवलज्ञानस्य पुद्गलादिमूर्तामूर्त-चेतनाचेतन-परद्रव्यगुणपर्यायप्रकरप्रकाशकत्वं वर्तते। ततो दर्शनमपि तादृशमेव भवति। सर्वज्ञ-तीर्थङ्करस्य कार्यपरमात्मनो ज्ञानमेव परप्रकाशकमस्ति। अत एव तस्य दर्शनमपि व्यवहारनयेन परप्रकाशकं सिद्धयति। निश्चयनयदृष्ट्या केवलिना ज्ञानं दर्शनं च स्व-प्रकाशकमेवेति कथयति। तद्यथा--

निश्चयनयेन ज्ञानमात्मप्रकाशक भवति, तस्माद् दर्शनमप्यात्मप्रकाशकम्। तथैवात्माऽऽत्मप्रकाशकस्तस्माद् दर्शनमप्यात्मप्रकाशकं भवति[1]। निश्चयनयेन शुद्धज्ञानं स्वपरप्रकाशकत्वलक्षणं भवति। तथैव शुद्धदर्शनमपि स्वपरप्रकाशकमेव। आत्मा हि विमुक्तसकलेन्द्रियव्यापारत्वात् स्वप्रकाशक इति। विमुक्तबर्हिविषयत्वाद् दर्शनमपि स्वप्रकाशकत्वलक्षणप्रधानम्। इत्थं स्वरूपप्रत्यक्षलक्षणलक्षितत्वादक्षुण्णसहजशुद्धज्ञान-दर्शनमयत्वान्निश्चयनयेन जगत्त्रय-कालत्रयवर्तिषु स्थावरजङ्गमात्मकसमस्तद्रव्यगुण-पर्यायविषयेषु विदूरः सन् स्वस्वरूपेऽनवरतमात्मा तिष्ठतीति। अत एव निश्चयेनात्मा स्वप्रकाशक एव भवति। तथा चोक्तम्—

आत्मा ज्ञानं भवति नियतं स्वप्रकाशात्मकं या
दृष्टिः साक्षात् प्रहतवलिरालम्बना सापि चैषः।
एकाकारस्वरसविवरापूर्णपुण्यः पुराणः
स्वस्मिन्नित्यं नियतवसतिर्निर्विकल्पे महिम्नि[2]॥

शुद्धनिश्चयेन केवलिनो ज्ञानं परद्रव्यं न जानाति; किन्त्वात्मानमेव जानाति पश्यति चेति भण्यते। तद्यथा--केवली भगवानात्मस्वरूपं पश्यति, लोकालोकौ न, यदि कोऽपि एवं भणति, तदा तस्य न किमपि दूषणमिति[3]। केवली भगवान् लोका-लोकौ जानाति, नैवाऽऽत्मानम्। यदि कोऽपि भणति, तस्य दूषणं नास्ति[4]। सकल-विमलकेवलज्ञानत्रितयलोचनोऽपुनर्भवकमनीयकामिनीजीवितेशः केवलज्ञानी षड्द्रव्य-सङ्कीर्णलोकत्रयं शुद्धाकाशमात्रालोकं च जानाति। निरुपरागं शुद्धात्मस्वरूपं नैव जानाति। व्यवहारनयेन कोऽपि तत्त्वविचारदक्षः कदाचिद् एवं वक्ति चेत्, तस्य न दूषणमिति। तथा चोक्तम्--

---

१. णाणं अप्पपयासं णिच्छयणयएण दंसणं तम्हा।
अप्पा अप्पपयासो णिच्छयणयएण दंसणं तम्हा॥ (नि० सा०, गा० १६५)

२. नि० सा०, टी०, श्लो० २८१।

३. अप्पसरूवं पेच्छदि लोयालोयं ण केवली भगवं।
जइ कोइ भणइ एवं तस्स य किं दूषणं होइ॥ (नि० सा०, गा० १६६)

४. लोयालोयं जाणइ अप्पाणं णेव केवली भगवं।
जइ कोइ भणइ एवं तस्स य किं दूसणं होइ॥ (नि० सा०, गा० १६९)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जानाति लोकमखिलं खलु तीर्थनाथः
स्वात्मानमेकमनघं निजसौख्यनिष्ठम् ।
नो वेत्ति सोऽयमिति त व्यवहारमार्गाद्
वक्तीति कोऽपि मुनिपो न च तस्य दोषः[1] ॥

व्यवहारनयेन केवली भगवान् सर्वं जानाति पश्यति । केवलज्ञानी नूनमात्मानं जानाति पश्यति[2] । व्यवहारनयेनात्मगुणघातकेन घातिकर्मप्रध्वंसनेन समासादितं सकलविमलकेवलज्ञानदर्शनाभ्यां जगत्त्रय-कालत्रयवर्तिसचराचरद्रव्यगुणपर्यायानेकस्मिन् समये जानाति पश्यति च । निश्चयनयेन केवलज्ञानी त्रिकाल-निरुपाधि-निरवधि-नित्यशुद्धं निजकारणपरमात्मानं स्वयं जानाति पश्यति । यतो ज्ञानस्य धर्मः स्वपर-प्रकाशकत्वं प्रदीपवत् । घटादिप्रमितेः प्रकाशो दीपस्तावद्भिन्नोऽपि स्वयंप्रकाश-स्वरूपत्वात् स्वं परं च प्रकाशयति । आत्मनि व्यवहारेण जगत्त्रयं कालत्रयं च परं ज्योतिःस्वरूपत्वात् स्वयंप्रकाशात्मकमात्मानं च प्रकाशयति । निश्चयनयेन सतत-निरुपराग-निरञ्जनस्वभावनिरतत्वात् स्वपरप्रकाशकत्वम् । सहजज्ञानं तावदात्मनः सकाशात् संज्ञालक्षणप्रयोजनेन भिन्नाभिधानलक्षणलक्षितमपि भिन्नं भवति, न वस्तु-वृत्त्या चेति । अस्मात् कारणाद् एतदात्मगतदर्शनसुखचारित्रादिकं जानाति । स स्वात्मानं कारणपरमात्मस्वरूपमपि जानाति । तथा चोक्तं पद्मप्रभमलधारिदेवेन—

आत्मा जानाति विश्वं ह्यनवरतमयं केवलज्ञानमूर्ति-
र्मुक्तिश्रीकामिनीकोमलमुखकमले कामपीडां तनोति ।
शोभां सौभाग्यचिह्नां व्यवहरणमयाद् देवदेवो जिनेश-
स्तेनोच्चैर्निश्चयेन प्रहृतमलकलिः स्वस्वरूपं स वेत्ति[3] ॥

**ज्ञानस्य सर्वगतत्वम्—**

आत्मा ज्ञानप्रमाणम्, ज्ञानं तु सर्वगतं वर्तत इति कथ्यते । तद्यथा—आत्मा ज्ञानप्रमाणं भवति, ज्ञानं ज्ञेयप्रमाणमुपदिष्टम् । ज्ञेयं तु लोकालोकं विद्यते, तस्माज्ज्ञानं सर्वगतमिति[4] । आत्मनो ज्ञानप्रमाणे न स्वीकृते सति दूषणं प्रदर्श्यते । तद्यथा—यस्य मते ज्ञानप्रमाणमात्मान भवति, तस्य स आत्मा हीनो वाऽधिको वा ज्ञानात् सकाशाद् भवतीति निश्चितमेव । यदि स आत्मा हीनस्तदाऽग्नेरभावे सत्युष्णगुणो यथा शीतलो

---

१. नि० सा०, टी०, श्लोक २८५ ।

२. जाणदि पस्सदि सव्वं ववहारणएण केवली भगवं ।
केवलणाणी जाणदि पस्सदि णियमेण अप्पाणं । (नि० सा०, गा० १५९)

३. नि सा०,टी०, श्लो० २७२, पृ० ३२१ ।

४. आदा णाणपमाणं णाणं णेयप्पमाणमुद्दिट्ठं ।
णेयं लोगालोगं तम्हा णाणं तु सव्वगयं ॥ (प्रव०सा०, ज्ञा०, गा० २३)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवति, तथा स्वाश्रयभूतचेतनात्मकद्रव्यसमवायाभावात् तस्यात्मनो ज्ञानमचेतनं सत् किमपि न जानाति[1]। अधिको वा ज्ञानात् सकाशाच्चेदुष्णगुणाभावे यथाऽग्निः शीतलो भवन् दहनक्रियां प्रत्यसमर्थो जायते, तथा ज्ञानगुणाभावे सत्यात्माप्यचेतनो भवन् कथं जानीयात् ? न कथमपीत्यभिप्रायः।

ज्ञानमयत्वाज्जिनवृषभो जिनः सर्वज्ञः, सर्वगतश्च तस्य विषयत्वाज्जगति सर्वेऽपि च तेऽर्थास्तद्गता भणिताः[2]। यदनन्तज्ञानमनाकुलत्वलक्षणादनन्तसुखं च तदाधारभूतस्तावदात्मा। इत्थम्भूतात्मप्रमाणं ज्ञानमात्मनः स्वरूपं भवतीति स्वस्वरूपं देहगतमपरित्यजन्नेव लोकालोकं परिच्छिनत्ति। तस्मात् कारणाद् व्यवहारेण सर्वगतो भण्यते भगवान्। येन कारणेन नीलपीतादिबहिःपदार्था आदर्शे बिम्बवत् परिच्छिन्दन्ति, आकारेण ज्ञाने प्रतिफलन्ति। तस्मात् कारणादुपचारेणार्थकार्यभूता अर्थाकारा अप्यर्था भण्यन्ते। ते च ज्ञाने तिष्ठन्तीत्युच्यमाने दोषो नास्ति।

**आत्मनो ज्ञानमेव सर्वपरिज्ञानम् —**

यस्त्रिभुवनस्थांस्त्रैकालिकानर्थान् युगपपन्न जानाति, स सपर्ययमेकं द्रव्यं वा ज्ञातुं न शक्नोति[3]। आकाशद्रव्यं तावदेकम्, धर्मद्रव्यमेकम्, तथैवाधर्मद्रव्यं च। लोकाकाशप्रमितासंख्येयकालद्रव्याणि, ततोऽनन्तगुणानि जीवद्रव्याणि भवन्ति। तेभ्योऽप्यनन्तगुणानि पुद्गलद्रव्याणि वर्तन्ते। तथैव सर्वेषां द्रव्याणां प्रत्येकमनन्तपर्याया भवन्ति। एतत् सर्वं ज्ञेयं तावत्, तत्र यदेकं जीवद्रव्यं ज्ञातृ भवति। एवं तावद् वस्तुस्वभावः। तत्र यथा दहनः समस्तं दाह्यं दहन् समस्तदाह्यहेतुकं समस्तदाह्याकारपर्यायपरिणतं सकलैकदहनस्वरूपमुष्णपरिणततृणपर्णाद्याकारमात्मानं स्वकीयस्वभावं परिणमते। तथा चायमात्मा समस्तं ज्ञेयं जानन् समस्तज्ञेयहेतुकं समस्तज्ञेयाकारपर्यायपरिणतं सकलैकाखण्डज्ञानरूपं स्वकीयमात्मानं परिणमते जानाति परिच्छिनत्ति। यथैव च स एव दहनो दाह्यमदहन् तदाकारेण न परिणमते, तथैवात्मापि समस्तं ज्ञेयमजानन् पूर्वोक्तलक्षणमेव सकलैकाखण्डज्ञानाकारं स्वकीयमात्मानं न परिणमते, न जानाति, न परिच्छिनत्ति। यथा दर्पणस्थबिम्बान्यपश्यन्

---

१. णाणप्पमाणमादा ण हवदि जस्सेह तस्स सो आदा।
हीणो वा अधिगो वा णाणादो हवदि धुवमेव ॥
हीणो जदि सो आदा तण्णाणमचेदणं ण जाणदि।
अधिगो वा णाणादो णाणेण विणा कहं णादि ॥ (प्रव०सा०,ज्ञा०गा० २४-२५)

२. सव्वगदो जिणवसहो सव्वेवि य तग्गया जगदि अट्ठा।
णाणमयादो य जिणो विसयादो तस्स ते भणिदा ॥ (तत्रैव—२६)

३. जो ण विजाणदि जुगवं अत्थे तेकालिके तिहुवणत्थे।
णादुं तस्स ण सक्कं सपज्जयं दव्वमेकं वा ॥ (प्रव० सा०, ज्ञा०, गा० ४८)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दर्पणमिव, स्वकीयदृष्टिप्रकाश्यान् पदार्थानपश्यन् हस्तपादाद्यवयवपरिणतं स्वकीय-देहाकारमात्मानं स्वकीयदृष्ट्या न पश्यति, तथैवायं केवलज्ञानप्रकाश्यान् पदार्थान-जानन् सकलाखण्डैककेवलज्ञानरूपमात्मानमपि न जानाति । अत एवेदं निश्चितं भवति यद् यः सर्वं न जानाति, स आत्मानमपि न जानातीति ।

यद्यनन्तपर्यायमेकं द्रव्यं नैव जानाति, तदा स युगपदनन्तानि सर्वाणि द्रव्य-जातानि कथं जानीयात्[1] । तावज्ज्ञानमात्मलक्षणं तच्चाखण्डप्रतिभासमयं सर्वजीव-साधारणं महासामान्यम् । तच्च महासामान्यं ज्ञानमयानन्तविशेषव्यापि । ते च ज्ञानविशेषा अनन्तद्रव्यपर्यायाणां विषयभूतानां ज्ञेयभूतानां परिच्छेदका ग्राहकाः। अखण्डैकप्रतिभासमयं यन्महासामान्यं तत् स्वभावमात्मानं योऽसौ प्रत्यक्षं न जानाति। स पुरुषः प्रतिभासमयेन महासामान्येन ये व्याप्ता अनन्तज्ञानविशेषास्तेषां विषयभूता अनन्तद्रव्यपर्यायास्तान् कथं जानीयात् । अत एव न जानातीति । अनेन ज्ञायते यद् य आत्मानं न जानाति, स सर्वमपि न जानाति । तथा चोक्तम्—

एको भावः सर्वभावस्वभावः सर्वे भावा एकभावस्वभावाः ।
एको भावस्तत्त्वतो येन बुद्धः सर्वे भावास्तत्त्वतस्तेन बुद्धाः ॥

आत्मपरिज्ञाने सति सर्वपरिज्ञानं भवति, सर्वपरिज्ञाने तु सत्यात्मपरिज्ञानं भवतीति । छद्मस्थानां सर्वपरिज्ञानं नास्ति चेदात्मपरिज्ञानं कथं भविष्यति ? आत्म-परिज्ञानाभावे चात्मभावना कथम् ? तदभावे केवलज्ञानोत्पत्तिर्नास्तीति । अस्य परिहारं करोति । तद्यथा—परोक्षप्रमाणभूतेन श्रुतज्ञानेन सर्वे पदार्था ज्ञायन्ते । कथमिति चेत्, लोकालोकादिपरिज्ञानं व्याप्तिज्ञानरूपेण छद्मस्थानामपि विद्यते । तच्च व्याप्ति-ज्ञानं परोक्षाकारेण केवलज्ञानविषयग्राहकं कथञ्चिन्दात्मैव भण्यते । स्वसंवेदनज्ञानेनात्मा ज्ञायते, ततश्च भावना क्रियते, तया रागादिविकल्परहितस्वसंवेदनज्ञानेन भावनया च केवलज्ञानं जायते । अत एवोक्तकथने दोषो नास्ति ।

**क्रमभाविज्ञानस्य परिसीमा —**

य इन्द्रियगोचरं पदार्थमीहापूर्वकं विजानन्ति, तेषां परोक्षभूताः सूक्ष्मादिपदार्था ज्ञातुमशक्या भवन्ति[2] ।

नैयायिकमते इन्द्रियसन्निकर्षप्रमाणं स्वीकृतं वर्तते । चक्षुरादीन्द्रियं घटपटादि-पदार्थपार्श्वे गत्वा पश्चादर्थं जानातीति सन्निकर्षलक्षणम् । इन्द्रियार्थयोः सम्बन्धः सन्निकर्षः । स सन्निकर्ष आकाशाद्यमूर्तपदार्थेषु देशान्तरितमेर्वादिपदार्थेषु कालान्तरित-

---

१. दव्वं अणंतपज्जयमेक्कमणंताणि दव्वजादाणि ।
ण विजाणादि जदि जुगवं कध सो सव्वाणि जाणादि ॥ (प्रव० सा०, ज्ञा०, गा० ४९)

२. प्रव० सा०, ज्ञा०, गा० ४० ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रामरावणादिषु स्वभावान्तरितभूतादिषु तथैवातिसूक्ष्मेषु परचेतोवृत्तिपुद्गलपरमाण्वादिषु च न प्रवर्तते। कस्मात् ? इन्द्रियाणां स्थूलविषयत्वात्, तथैव मूर्तविषयत्वाच्च। तस्मात् कारणादिन्द्रियज्ञानेन सर्वज्ञो न भवति।

तत एवातीन्द्रियज्ञानोत्पत्तिकारणं रागादिविकल्परहितं स्वसंवेदनज्ञानं विहाय पञ्चेन्द्रियसुखसाधनोभूत इन्द्रियज्ञाने विविधमनोरथविकल्पजालरूपे मानसज्ञाने च ये रतिं कुर्वन्ति, ते सर्वज्ञा न भवन्ति।

यदि ज्ञानिनो ज्ञानं क्रमशोऽर्थान् प्रतीत्योत्पद्यते, तदा तज्ज्ञानं नित्यं क्षायिकं सर्वगतं च नैव भवति [१]। तज्ज्ञानं पराधीनत्वेन नित्यं न भवति। क्षयोपशमाधीनत्वेन क्षायिकं न भवति। तत एव युगपत् समस्तद्रव्यक्षेत्रकालभावानां परिज्ञानसामर्थ्याभावात् सर्वगतं न भवति। यज्ज्ञानं क्रमेण अर्थान् प्रतीत्य जायते, तेन सर्वज्ञो न भवतीति।

**अबन्धकाः केवलिनः—**

केवलिनो जानन्तः पश्यन्तोऽपीहापूर्वकं न भवन्ति, तस्मात् स केवलज्ञानी कथ्यते। वाञ्छाभावादेव तेनाबन्धका भणिताः[२]। परिणामपूर्वकं वचनं तथेहापूर्वकं वचनं जीवस्य बन्धकारणं भवति; किन्तु केवलिनो वचनं परिणामविरहितमीहारहितं च भवति। तस्मात् केवलज्ञानिनो न बन्ध इति[३]।

अमनस्काः केवलिन इत्यागमवचनात्। सम्यग्ज्ञानी जीवः क्वचित् कदाचिदपि स्वबुद्धिपूर्वकं वचनं न वक्ति। अस्मात् कारणाज्जीवस्य मनःपरिणतिपूर्वकं वचनं बन्धकारणमिति; किन्तु केवलिनो वचनं मनःपरिणामपूर्वकं न भवति। ईहापूर्वकं वचनमेव साभिलाषात्मकजीवस्य बन्धकारणं भवति। केवलमुखारविन्दविनिर्गतो दिव्यध्वनिरनीहात्मकः समस्तजनहृदयाह्लादकारणं भवति। ततः सम्यग्ज्ञानिनो बन्धाभावो भवति। तथा चोक्तं पद्मप्रभमलधारिदेवेन—

---

१. उप्पज्जदि जदि णाणं कमसो अत्थे पडुच्च णाणिस्स।
तं णेव हवदि णिच्चं ण खाइगं णेव सव्वगदं॥ (प्रव० सा०, ज्ञा०, गा० ५०)

२. जाणतो पस्संतो ईहापुव्वं ण होइ केवलिणो।
केवलणाणी तम्हा तेण दु सो अबंधगो भणिदो॥ (नि० सा०, गा० १७२)

३. परिणामपुव्ववयणं जीवस्स य बंधकारणं होइ।
परिणामरहियवयणं तम्हा णाणिस्स ण हि बंधो॥
ईहापुव्वं वयणं जीवस्स य बंधकारणं होइ।
ईहारहियं वयणं तम्हा णाणिस्स ण हि बंधो॥ (तत्रैव—१७३-१७४)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ईहापूर्वं वचनरचनारूपमत्रास्ति नैव
तस्मादेषः प्रकटमहिमा विश्वलोकैकभर्त्ता।
अस्मिन् बन्धः कथमिव भवेद् द्रव्यभावात्मकोऽयं
मोहाभावान्न खलु निखिलं रागदोषादिजातम् ॥

एको देवस्त्रिभुवनगुरुर्नष्टकर्माष्टकार्धः
सद्बोधस्थं भुवनमखिलं तद्गतं वस्तुजालम्।
आरातीये भगवति जिने नैव बन्धो न मोक्ष-
स्तस्मिन् काचिन्न भवति पुनर्मूर्च्छना चेतना च[1] ॥

केवलिनः स्थाननिषण्णविहारा ईहापूर्वकं न भवन्ति, तस्माद् बन्धो न भवति। मोहनीयस्य साक्षार्थः संसारिजीवानां भवति[2]। केवलिनः परमवीतरागसर्वज्ञस्येहापूर्वकं न किमपि वर्तनम्, अतः स भगवान् न चेहते, मनःप्रवृत्तेरभावात्। तस्मात् त ईहा-पूर्वकं न तिष्ठन्ति, नोपविशन्ति, न च श्रीविहारादिकं कुर्वन्ति। ततस्तस्य तीर्थङ्कर-परमदेवस्य द्रव्यभावात्मकचतुर्विधो बन्धो न भवति।

मोहनीयकर्मविलासविजृम्भितः, अक्षार्थमिहेन्द्रियार्थं तेन सह यो वर्तत इति साक्षार्थो मोहनीयस्य कर्मणो वशंगतानां साक्षार्थप्रयोजनानां संसारिणामेव बन्ध इति।

आत्मा पदार्थान् जानन्नपि न परिणमते, न गृह्णाति, न च तेष्वर्थेषूत्पद्यते। तेन कारणेनाबन्धकः कथितः[3]।

नानागुणपर्यायेण संयुक्तं सकलद्रव्यं यः सम्यग्रूपेण न पश्यति, तस्य परोक्ष-दृष्टिर्भवति[4]। यो मूर्त्तादिद्रव्यं समस्तगुणपर्यायात्मकं न पश्यति, तस्य केवलदृष्टिर्न भवति। मूर्तस्य मूर्तगुणा भवन्ति, अचेतनस्याचेतनगुणाः। अमूर्तस्यामूर्तगुणा भवन्ति, चेतनस्य च चेतनगुणाः। षड्धा निवृद्धिरूपाः सूक्ष्माः परमागमप्रामाण्यादभ्युपगम्या अर्थपर्यायाः षण्णां द्रव्याणां साधारणाः सन्ति। नरनारकादिव्यञ्जनपर्याया द्रव्य-क्षेत्र-काल-भव-भावरूपपञ्चसंसारप्रपञ्चयुक्तानां जीवानां भवन्ति। पुद्गलानां स्थूलस्थूलादि-

---

१. नि० सा०, टी०, श्लो० २८९-२९०।

२. ठाणणिसेज्जविहारा ईहापुव्वं ण होइ केवलिणो।
तम्हा ण होइ बंधो साक्खट्ठं मोहणीयस्स ॥ (नि० सा०, गा० १७५)

३. ण वि परिणमदि ण गेण्हदि उप्पज्जदि णेव तेसु अत्थेसु।
जाणण्णवि ते आदा अबंधगो तेण पण्णत्तो ॥ (प्रव० सा० ज्ञा०, गा० ५२)

४ पुव्वुत्तसयलदव्वं णाणागुणपज्जएण संजुत्तं।
जो ण य पेच्छइ सम्मं परोक्खदिट्ठी हवे तस्स ॥ (नि० सा०, गा० १६८)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्कन्धपर्याया वर्तन्ते। धर्माधर्माकाशकालानां शुद्धपर्यायाश्चेति। एभिः संयुक्तं तद्द्रव्य-जालं यो न पश्यति, तस्य संसारिणामिव परोक्षदृष्टिर्भवति। तथा चोक्तं नियमसार-टीकायाम्—

यो नैव पश्यति जगत्त्रयमेकदैव
कालत्रयं च तरसा सकलज्ञमानी।
प्रत्यक्षदृष्टिरतुला न हि तस्य नित्यं
सर्वज्ञता कथमिहास्य जडात्मनः स्यात्[1] ॥

**केवलज्ञानस्य ज्ञेयविषयाः—**

ज्ञानी सर्वज्ञो वा केवलज्ञानस्वभावो भवति। जगत्त्रय-कालत्रयवर्तिपदार्था ज्ञेयात्मका भवन्ति, न च ज्ञानात्मकाः। पदार्थाश्चान्योन्यमेकत्वेन वर्तन्ते। अक्षातीतो ज्ञानी ज्ञेयेषु प्रविष्टो न भवति, न चाऽविष्टः; किन्तु रूपिपदार्थांश्चक्षुरिव निखिलं जगन्नियतं जानाति, पश्यति च[2]। यथा रूपिद्रव्याणि चक्षुषा सह परस्परं सम्बन्धाभावेऽपि स्वाकारसमर्पणे समर्थानि सन्ति। चक्षूंषि च तदाकारग्रहणे समर्थानि भवन्ति। तथैव त्रैलोक्यवर्तिपदार्थास्त्रिकालपर्यायपरिणता ज्ञानेन सह परस्परप्रदेशसम्बन्धाभावेऽपि स्वकीयाकारसमर्पणे समर्था भवन्ति। अत एवाऽखण्डैकप्रतिभासमयं केवलज्ञानमपि तदाकारग्रहणे समर्थं भवतीति। यथा लोचनं कर्तृरूपिद्रव्याणि यद्यपि निश्चयनयेन न स्पृशति, तथापि व्यवहारनयेन स्पृशतीति लोके प्रतिभाति। तथैवायमात्मा मिथ्यात्व-रागाद्यास्रवाणामात्मनश्च सम्बन्धि यत् केवलज्ञानात्पूर्वं विशिष्टभेदज्ञानं तेनोत्पन्नं केवलज्ञानं केवलदर्शनं च तेन त्रिलोकत्रिकालवर्तिपदार्थान् निश्चयनयेन न स्पृशति; किन्तु व्यवहारनयेन स्पृशति। तथा स्पृशन्निव ज्ञानेन जानाति दर्शनेन च पश्यति। अतीन्द्रियसुखपरिणतः सन् सोऽक्षातीतो भवति। व्यवहारनयेन ज्ञानं पदार्थेषु कथं वर्तत इति दृष्टान्तेन कथ्यते। तद्यथा—यथा जगति दुग्धाध्युषितमिन्द्रनीलं रत्नं स्वकीयप्रभया तद् दुग्धमप्यभिभूय वर्तते, तथैवार्थेषु ज्ञानं विद्यते[3]। यथेन्द्रनीलरत्नं कर्तृ स्वकीयनीलप्रभया करणभूतया दुग्धं नीलं कृत्वा वर्तते। तथा निश्चयरत्नत्रयात्मकेन परमसामयिकसंयमेन जातं केवलज्ञानं स्वपरपरिच्छित्तिसामर्थ्येन निखिलाज्ञानतमःस्तरस्कृत्य युगपदेव सर्वपदार्थेषु परिच्छित्त्याकारेण वर्तत इत्यभिप्रायः।

---

१ नि० सा०, टी०, श्लो० २८४।

२. णाणी णाणसहावो अत्था णयप्पगा हि णाणिस्स।
रूवाणिव चक्खूणं णेवण्णोण्णसु वट्टंति॥
ण पविट्ठो णाविट्ठो णाणी णेयेसु रूवमिव चक्खू।
जाणदि पस्सदि णियदं अक्खातीदो जगमसेसं॥ (प्रव० सा० ज्ञा०, गा०, २८-२९)

३. रदणमिह इंदणीलं दुद्धज्झसियं जहा सभासाए।
अभिभूय तं पि दुद्धं वट्टदि तह णाणमत्थेसु॥ (तत्रैव—३०)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**पदार्था ज्ञाने कथं वर्तन्ते —**

यदि ते पदार्था ज्ञाने न सन्ति तर्हि सर्वगतं स भवति। तथा सर्वगतं ज्ञानमर्था ज्ञानस्थिताः कथं न भवन्ति[1]। यत एव व्यवहारेण ज्ञेयपरिच्छित्त्याकारग्रहणेन ज्ञानं सर्वगतं भण्यते। तस्मादेव ज्ञेयपरिच्छित्त्याकारसमर्पणेन पदार्था अपि व्यवहारेण ज्ञानस्थिता भण्यन्ते।

केवली भगवान् परपदार्थं न गृह्णाति, न मुञ्चति, नैव च परिणमते; किन्तु स तं सर्वं निरवशेषं समन्ततः पश्यति जानाति च[2]। केवलज्ञानी तावदभ्यन्तरे कामक्रोधादिकं वहिर्विषये पञ्चेन्द्रियविषयादिकं बहिर्द्रव्यं न गृह्णाति। स्वकीयज्ञानाद्यनन्तचतुष्टयं च न मुञ्चति। तथा च जीवः केवलज्ञानोत्पत्तिक्षण एव युगपज्जानन् परं विकल्पान्तरं न परिणमते। स्वतत्त्वकेवलज्ञानज्योतिषा जात्यमणिकल्पो निष्कम्पचैतन्यप्रकाशो भूत्वा स्वात्मानं स्वात्मना स्वात्मनि जानाति पश्यति च।

**केवलज्ञानेऽतीतानागतपर्यायप्रतिभासनम् —**

केवलज्ञाने सर्वे सद्भूता असद्भूता अपि पर्यायास्तासां शुद्धजीवद्रव्यजातीनां विशेषतो वर्तमाना इव प्रतिभासन्ते[3]। यथा छद्मस्थपुरुषस्याऽतीतानागतपर्याया मनसि चिन्तयतः प्रतिस्फुरन्ति। यथा च चित्रभित्तौ बाहुबलिभरतादिव्यतिक्रान्तरूपाणि श्रेणिक-तीर्थङ्करादिभाविरूपाणि च वर्तमानानीव प्रत्यक्षेण दृश्यन्ते। तथा चित्रभित्तिस्थानीय-केवलज्ञाने भूतभाविनश्च पर्याया युगपत् प्रत्यक्षेण दृश्यन्ते। यथायं केवली भगवान् परद्रव्यपर्यायान् परिच्छित्तिमात्रेण जानाति, न च तन्मयत्वेन। निश्चयनयेन केवलज्ञानादिगुणाधारभूतं स्वकीयसिद्धपर्यायमेव स्वसंवित्त्याकारेण तन्मयो भूत्वा परिच्छिनत्ति जानाति। तथा चासन्नभव्यजीवेनापि निजशुद्धात्मसम्यग्ज्ञानदर्शनचारित्र-रूपनिश्चयरत्नत्रयपर्यायमेव जानाति।

भूता भाविनश्च पर्याया अविद्यमानत्वाद् असद्भूता उच्यन्ते[4]। ते चाविद्यमान-त्वाद् असद्भूता अपि वर्तमानज्ञानविषयत्वाद् व्यवहारेण भूतार्था भवन्ति। तथैव

---

१ जदि ते ण सन्ति अत्था णाणे णाणं ण होदि सव्वगयं।
सव्वगयं वा णाणं कहं ण णाणट्ठिया अत्था ॥ (प्र० सा०, ज्ञा०, गा० ३१)

२. गेण्हदि णेव ण मुंचदि ण परं परिणमदि केवली भगवं।
पेच्छदि समंतदो सो जाणदि सव्वं णिरवसेसं ॥ (तत्रैव—३२)

३. तक्कालिगेव सव्वे सदसब्भूदा हि पज्जया तासिं।
वट्टंते ते णाणे विसेसदो सव्वजादीणं ॥ (तत्रैव—३७)

४. जे णेव हि संजाया जे खलु णट्ठा भवीय पज्जाया।
ते होंति असब्भूया पज्जाया णाणपच्चक्खा ॥ (तत्रैव—३८)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

केवलज्ञानप्रत्यक्षाश्च भवन्ति। यथा भगवान् निश्चयेन परमानन्दैकलक्षणसुखस्वभावं मोक्षपर्यायमेव तन्मयत्वेन परिच्छिनत्ति। व्यवहारनयेन तु परद्रव्यपर्यायं जानाति। तथैव भावितात्मना पुरुषेण रागादिविकल्पोपाधिरहितस्वसंवेदनपर्यायो ज्ञातव्यः, गौणरूपेण बहिर्द्रव्यपर्यायाश्चेति। यदि वर्तमानपर्यायवदतीतानागतपर्याय ज्ञानं कर्तृकर्मकरणव्यवधानरहितत्वेन साक्षात्प्रत्यक्षं न करोति, तर्हि तज्ज्ञानं दिव्यं न भवति। वस्तुतस्तु ज्ञानमेव न भवतीति। यथा केवली भगवान् परकीयद्रव्यपर्यायान् यद्यपि परिच्छित्तिमात्रेण जानाति। निश्चयनयेन सहजानन्दैकस्वभावे स्वशुद्धात्मनि तन्मयत्वेन परिच्छित्तिं करोति। तथा निर्मलविवेकिजनोऽपि यद्यपि व्यवहारेण परकीयद्रव्यगुणपर्यायपरिज्ञानं करोति, तथापि निश्चयेन निर्विकारस्वसंवेदनपर्याये विषयत्वात् पर्यायेण परिज्ञानं करोति।

**केवलज्ञानस्य माहात्म्यम्—**

केवलज्ञानस्य माहात्म्यप्रतिपादनद्वारेण तावदाचार्यः कथयति यज्ज्ञानं त्रिकालनित्यविषयं सर्वत्र सम्भवं नानाजातिभेदेन विचित्रं समस्तं सदर्थं युगपज्जानाति[1]। युगपत् सकलग्राहकज्ञानेन सर्वज्ञो भवति। ज्योतिष्कमन्त्रवादरससिद्ध्यादीनि यानि खण्डविज्ञानानि मूढजीवानां चित्तचमत्कारकारणानि परमात्मभावनाविनाशकानि च तत्राग्रहं त्यक्त्वा जगत्त्रयकालत्रयसकलवस्तुनो युगपत् प्रकाशकमविनश्वरमखण्डैकप्रतिभासरूपं सर्वज्ञशब्दवाच्यं यत् केवलज्ञानं तस्यैवोत्पत्तिकारणभूतं यत् समस्तरागादिविकल्पजालेन रहितं सहजशुद्धात्मनोऽभेदज्ञानम्, तत्र भावना कर्त्तव्येति।

ज्ञानं नरस्य सारम्, सारमपि सम्यक्त्वं भवति, सम्यक्त्वतश्चरणम्, चरणतो निर्वाणं भवति। सम्यक्त्वसहितेन ज्ञानेन, दर्शनेन, तपसा, चारित्रेण च चतुर्णामपि समायोगे जीवाः सिद्धा भवन्तीति न सन्देहः[2]। द्रव्यपर्यायान् सम्यग्दर्शनेन पश्यति, ज्ञानेन जानाति, सम्यक्त्वेन श्रद्दधाति, चारित्रजान् दोषांश्च परिहरति[3]। दर्शनज्ञानचारित्रं त्रीण्यपि परमश्रद्धया जानीहि, यज्ज्ञात्वा योगिनोऽचिरेण निर्वाणं लभन्ते[4]। निर्मल–सुविशुद्धभावसंयुक्ता ज्ञानसलिलं प्राप्य शिवालयवासिनस्त्रिभुवनचूडामणयः सिद्धा भवन्ति। ज्ञानगुणैर्विहीनास्त इष्टं लाभं न लभन्त इति गुणदोषौ ज्ञात्वा तत् सम्यग्ज्ञानं विजानीहि[5]। संयमसंयुक्तस्य सुध्यानयोग्यस्य च मोक्षमार्गस्य लक्ष्यं ज्ञानेन लभ्यते, तस्माच्च ज्ञानमवगन्तव्यम्। यथा वेद्यकविहीनः काण्डस्य लक्ष्यं स्फुटं न

---

१. तिक्कालणिच्चविसयं सयलं सव्वत्थ संभवं चित्तं।
जुगवं जाणदि जोण्हं अहो हि णाणस्स माहप्पं॥ (प्रव० सा०, ज्ञा०, गा० ५१)

२. दर्शनप्राभृतम्, गा० ३१–३२; ३. चारित्रप्राभृतम्, गा० १७।

४. तत्रैव, गा० ३९; ५. तत्रैव, गा० ४०–४१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लक्षयति, तथा मोक्षमार्गरहितोऽज्ञानी लक्ष्यं नापि लक्षयति। ज्ञानं पुरुषस्य भवति, पुरुषो विनयसंयुक्तो ज्ञानं लभते, मोक्षमार्गं चिन्तयन् ज्ञानेन लक्ष्यं लभते[1]। भगवत्याराधनायां ज्ञानं संसारकारणं मुक्तिकारणं च प्रकाशयतीति कथितम्। निर्जरानिमित्तं तपो गुप्तिकरः संयमश्चेति त्रयाणामपि संयोगे जिनशासने मोक्षो दृष्टः। चरणविहीनं ज्ञानम्, दर्शनविहीनं लिङ्गग्रहणम्, संयमहीनं तपश्च यः करोति तन्निरर्थकम्[2]। ज्ञानमनुष्ठानास्पदम्, ज्ञानं मोहतमोऽपहम्, ज्ञानं पुरुषार्थकरम्, ज्ञानं च निर्वृत्तिसाधनम्। तथा चोक्तं ज्ञानार्णवे—

यत्र बालश्चरत्यस्मिन् पथि तत्रैव पण्डितः।
बालः स्वमपि बध्नाति मुच्यते तत्त्वविद् ध्रुवम्॥

दुरिततिमिरहंसं मोक्षलक्ष्मीसरोजं
मदनभुजगमन्त्रं चित्तमातङ्गसिंहम्।
व्यसनघनसमीरं विश्वतत्त्वैकदीपं
विषयशफरजालं ज्ञानमाराधय त्वम्॥

अस्मिन् संसारकक्षे यमभुजगविषाक्रान्तनिःशेषतत्त्वे
क्रोधाद्युत्तुङ्गशैले कुटिलगतिसरित्पातसन्तापभीमे।
मोहान्धाः सञ्चरन्ति स्खलनविधुरताः प्राणिनस्तावदेते
यावद्विज्ञानभानुर्भवभयदमिदं नोच्छिनत्त्यन्धकारम्।

---

१. बोधप्राभृतम्, गा० २०–२२।

२. णाणं पयासओ सोधओ तवो संजमो य गुत्तियरो।
तिण्हंपि समाओगे मोक्खो जिणसासणे दिट्ठो॥
णाणं करणविहूणं लिंगग्गहणं च दंसणविहूणं।
संजमहीणो य तवो जो कुणदि णिरत्थयं कुणदि॥ (भगवती आराधना, ७६८ ६९)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आषाढस्य प्रथमदिवसानुचिन्तनम्

**श्रीचन्द्रमौलिद्विवेदी**
साहित्यविभागः,
संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालये
वाराणस्याम्

❀❀❀

सुप्रसिद्धं महाकवेः कालिदासस्य काव्यकुलम् । तत्र मेघदूतस्य माधुर्यं नास्ति तिरोहितं विदुषाम् । हेतुस्तु विप्रलम्भश्रृङ्गारस्य निबन्धनम् । उक्तञ्च—

**श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः ।**
**श्रृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ।।**

इत्थं विप्रलम्भे माधुर्यातिशयादत्र मनागपि कवेरनवधानं सितशर्करामध्यपतित-सिकताकणवत् सहृदयानलमुद्वेजयितुं प्रभवतीति नास्ति संशयः। अतो नितरां यशोभाजा महाकविना कालिदासेनोपनिबध्यमानस्य विप्रलम्भाङ्गिनः काव्यस्य मेघदूतस्योपर्युक्तं पाठमादाय किञ्चित्प्रस्तौमि ।

विप्रलम्भस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुकः पञ्चविधः प्राक्तनैर्दर्शितः। तेष्वनादिसङ्गमाभावेऽपि गुणश्रवणादिना प्रियतमस्य प्राप्तीच्छाऽभिलाषः। एकदेशस्थितयोरपि गुरुजनलज्जादितः सङ्गमप्रतिबन्धो विरहः । प्रिये सपत्नीरते कोप ईर्ष्या। गुरुजनाज्ञावशाद् धनाद्यर्जनाय दूरदेशगमनं प्रवासः । एतावन्तं कालं तव प्रियसमागमो मास्तु इत्यादिरूपः शापः। इति पञ्चहेतवः। इत्थं क्रमेण गुणादिश्रवणमात्रम्, गुर्वादिलज्जामात्रम्, कोपमात्रम्, धनाद्यर्जनमात्रम्, कालावधिमात्रञ्चैकैकस्मिन् प्राधान्यं भजते। अत्र शापहेतुको विप्रलम्भः। अस्य कालावधिः प्रधानम्। परस्परं दृढानुरागव्यक्तये वियुक्तयोर्नायिकयोरनुक्षणम् "एतावान् कालो व्यतीतः, एतावानवशिष्टः" इति मनसि रूढमपेक्ष्यते ।

कालिदासो दिगन्तविश्रुतयशा महाकविः । "[1]अस्मिन् कविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते" इति श्रीमदानन्दवर्धनैरपि समुदघोषि ।

---

१. ध्वन्यालोकः—२।८-९ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कविरपि शापकालावधिविषये नावहित इति न, सोऽपि—

**तामावश्यं दिवसगणनातत्परामेकपत्नी-**
**मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।**
**आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां**
**सद्यःपातिप्रणयिहृदयं विप्रयोगे रुणद्धि[1] ।।**

**शेषान् मासान् विरहदिवसे स्थापितस्यावधेर्वा**
**विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः[2] ।**
**शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ ।**
**शेषान् मासान् गमय चतुरो लोचने मीलयित्वा[3] ।।**

इत्यादिनाऽङ्गिनो रसस्याधारभूतं कालं नितरामवधानेन निरूपयति । तत्र हेतुरपि नितरां स्पष्टः । शापेन विप्रलब्धो विरही यक्षः स्वप्रियामुज्जीवितुकामः स्वयञ्च तज्जीवनालम्बी तिष्ठति । चेन्मनागप्यनयोरवधिकालगणनायां प्रमादस्तदानीं परस्परं दृढं प्रेमापि संशयमापद्यते । सन्देशप्रेषको यक्षः शापावधिकाले भ्रान्तः स्यात्तर्हि सन्देश-पात्रं प्रिया कथं विश्वसिति ? यदयं मे प्रियो नितरां मय्यासक्तो मामेवाहर्निशं ध्यायन् संयोगप्रतिबन्धकीभूतं शापावधिकालं यापयन्नास्ते नियतकालावधिकविरहबोधक-सन्देशेन नियतमेव यक्षस्य प्रियाविषयकरतिमत्त्वं तदितरेणान्यासक्तचित्तत्वं व्यक्ती-भवति । नियतवियोगकालावच्छिन्नां स्वनिष्ठप्रियाविषयकरतिमत्तां संदेशेन प्रियां प्रति प्रेषितुकामो यक्षश्चेन्नियतकालमेव विस्मरेत्तदानीं तत्र रतिमादधातीति व्यञ्जनं नितरां दुर्लभं स्यात् । एतादृशं सन्देशमाकर्ण्य कदाचित्तस्य स्वस्माद् विरक्तिमनुसन्धाय कुसुमस्य वन्धसदृशीं संयोगाशां विच्छिद्य प्राणानपि सा न धारयेत्, तथात्वे च दयिता-जीवितालम्बनार्थी सन्देशप्रापणेषी विरही यक्षः प्रियाजीवनरूपफलावाप्तिस्थानेऽनर्थावाप्ति स्वीकृत्य विषममेवाधास्यति न प्राणान् । इत्थं "सन्देशार्थः क्व पटुकरणैः प्राणिभिः प्रापणीयः" इति निबध्नताऽपि कविना प्रमादान्महत्कलङ्कगर्ते पतितं स्यात् ।

आषाढस्य प्रथमो दिवसः सन्देशदिवसः, ततश्चतुर्मासानन्तरं हरिप्रबोधिन्यां कार्तिकशुक्लैकादश्यां शापान्तदिवस इति वचनं परस्परमसम्बद्धम् । यद्यप्याषाढकार्तिक-मासयोरन्तराले चत्वारो मासा भवन्ति, तथापि सामान्येन मासचतुष्टयानन्तरमावयोः

---

१. मेघदूते, श्लो० १०, कालिदासग्रन्थावली १९८६ काशीहिन्दूविश्वविद्यालयः ।
२. तत्रैव, श्लो० ८५ ।
३. तत्रैव, श्लो० १०८ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समागमो भविता इति वक्तव्यत्वे आषाढेऽपि दिवससन्निवेशः कार्तिके नियततिथिसन्निवेशो न कदापि सामान्यं समर्थयति विशेषदिवसादिग्रहे दिनाधिक्यात् "शेषान् मासान् गमय चतुरः" इत्युक्तिर्विसंवदते। यत्र विप्रयोगे "त्रुटिर्युगायते", तत्र कतिपयदिवसानामगणनं मासादिना वा गणनमुभयं सहृदयानुद्वेजयत एव। इत्थं पद्यमिदं कवेः निखिलामपि कीर्ति कवलयितुं बद्धपरिकरं पुरेवेदानीमपि सहृदयानान्दोलयति। तत्रापि "त्रुटिर्युगायते" इत्युक्तिमनवगच्छता सहृदयहृदयमस्पृशता केनचिद् विदुषा "प्रत्यासन्ने नभसि...." इत्यादिकमनुचिन्त्य प्रथमस्य स्थाने प्रशम इति पाठः कल्पितः। आषाढप्रशमानन्तरमेव नभोमासस्य प्रारम्भ इति मनसि निधायैव कदाचित् तेन विदुषा सः संशोधितः स्यात्; किन्तु तत्र तस्य केवलं वैदुष्यमेव, न तु कालिदासमार्गाकलनप्रावीण्यम्। किं वा वैदुष्येऽपि चिह्नम्—

प्रशमदिवसे इत्यत्र प्रशमपदं किमर्थम्? प्रशमेत्यत्र कर्मधारयो वा बहुव्रीहिः? कर्मधारये प्रकृष्टश्चासौ शम इति विग्रहे शमार्थः शान्तिरेव प्रधानम्। "शमथस्तु शमः शान्तिः" इत्यमरकोषनिर्देशः। शान्त्यर्थकत्वे 'दिवसप्रशम" इति वक्तव्यम्, न तु "प्रशमदिवसे"। इदानीमेव षष्ठीसमासः प्रकृतार्थबोधकः, बहुव्रीहौ तु प्रकृष्टः शमो यस्य यस्मिन् वेति विग्रहे दिवसेन सह विशेषणसमासे प्रशमस्य तद्गुणीभूतत्वे तत्रैव विशेषाधायकत्वम्। एतादृक्पाठकल्पकस्य विदुषः कुत्र विवक्षा? आषाढस्य शमे वा तत्सम्बन्धिनः कस्यचिद्दिवसस्य शमे? आषाढस्य चेत् प्रशमे दिवस इति व्यस्तमेव वक्तव्यम्, न तु प्रशमदिवस इति समस्तम्। इत्यादिकमाकलय्य डॉ० द्विवेदिभिः सम्पादितायां कालिदासग्रन्थावल्यां मूलपाठत्वेन प्रथम एव पाठ उपात्तः, न तु प्रशमः। निर्देशस्तु टिप्पण्यां प्रशमस्यापि कृतः। कालिदासं भृशमभ्यस्तवतां मर्मविबोधलब्धप्रावीण्यानां सहृदयानां विदुषां डॉ० द्विवेदिनां मनसि शापात्मके विप्रलम्भे सन्देशं प्रेषिषिषोर्यक्षस्य कालात्मकोऽनिश्चयोऽवश्यमेव चिन्त्योऽभविष्यत्, अत एव पादटिप्पण्यां "प्रथमं प्रमुखं हरिशयनपर्वयुतम्" इति तैर्निश्चितः समयो दर्शितः।

अत्र प्रथमं प्रमुखमित्यभिधेयम्; किन्तु आषाढे प्रायशः तिस्रस्तिथयः प्रामुख्यं भजन्ते। रथयात्रोत्सवेन द्वितीया[1], हरिशयनोत्सवेनैकादशी, गुरुपूर्णिमोत्सवेन पूर्णिमेति। विशेषोक्तौ सामान्येन निर्देशाद् विशेषपरिवृत्तित्वरूपो दोषो विप्रलम्भेऽङ्गिनि काव्ये कृतपदो भवेत्।

---

१. आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता।
तस्यां रथे समारोप्य रामं मां भद्रया सह॥
यात्रोत्सवं प्रवृत्याथ प्रीणयेच्च द्विजान् बहून्॥ (स्कन्दपुराणे)
नातः श्रेयःपदो विष्णोरुत्सवः शास्त्रसम्मतः।
रथयात्रैव यात्राणां मुख्येत्याह प्रजापतिः॥ (यात्रातत्त्वम्)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

काशीहिन्दूविश्वविद्यालये पूर्वं सम्पन्ने काशीकालिदासमहोत्सवे जायमानायां द्वितीयदिवससंगोष्ठ्यां कतिपयैर्विद्वद्भिः प्रथम-प्रशमपाठौ पर्यालोचिषाताम् । तत्र कालिदासकालिकं पञ्चाङ्गादिकं शुक्लपक्षात् प्रारभत वा कृष्णपक्षात्? इत्यादिकं निर्णेतव्यतामर्हतीति दर्शितम्; किन्तु तदपि नास्ति प्रयोजनसाधकम्, चेत् कृष्ण-पक्षात् प्रारप्स्यत तदानीं षड्विंशतिदिनानाम्, चेत् शुक्लपक्षात्तदानीं दशदिनाना-माधिक्यं चतुर्भ्यो मासेभ्यो भवत्येव। यत्र पुष्पैः प्रतिदिवसगणना क्रियते, यत्र च "त्रुटिर्युगायते", तत्र दिनानां न्यूनाधिक्येनानियतकालो विरहिसन्देशस्तादृशं प्रेम नाभि-व्यनक्ति यादृशमपेक्ष्यते।

अतः प्रथमस्थाने प्रमथपदं ग्राह्यमित्यस्माकं प्रतिभाति।

"आषाढस्य प्रमथदिवसे मेघमाश्लिष्टसानुम्" इति पाठेनानायासेनैव सर्वोऽपि संशयो गलति, भवति च शापात्मकविप्रलम्भस्य मूलरक्षणम् । महाकविरपि कलङ्क-पङ्कान्मुक्तो यशोलोके नितरां मोदताम्; किन्तु प्रथम-प्रशमपाठौ तु पाण्डुलिपौ लभ्येते, न कुत्रापि प्रमथपाठः, तल्लाभाभावे कथञ्च पाठोऽयमाद्रियेतेति चेन्मदीयं सप्रश्रयं निवेदनम्—

लिपिकर्तृरनधिगतपदार्थत्वात् प्रयोगाधिक्येन भृशमभ्यस्तीभवतः प्रथमशब्दस्यैव प्रमथस्थाने ग्रहणात्, वर्णविपर्ययदोषाद् वा लिखितस्यापि प्रमथशब्दस्य प्रथमशब्देन ग्रहणं सम्भवति। अस्मदाचार्यपादैः डॉ० द्विवेदिभिरपि कुमारसम्भवस्य सप्तमसर्गस्थे पञ्चनवतितमे श्लोके पाण्डुलिपौ लब्धस्यासम्बद्धस्य प्रमथशब्दस्य प्रथमरूपेण समञ्जसं परिवर्तनं व्यधायि।

**नवपरिणयलज्जाभूषणां तत्र गौरीं**
**वदनमपहरन्तीं तत्कृतोत्क्षेपमीशः ।**
**अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्**
**प्रमथमुखविकारैर्हासयामास गौरीम् ॥**

अत्र प्रमथपदस्य स्थाने टिप्पण्यां प्रथम-प्रथय-बहुत्र इति । इत्थं प्रमथस्य स्थाने प्रथमस्य लेखनं लिपिकस्याज्ञानात्, प्रमादाद् वा यथाऽत्र, तथैव शक्यसम्भवं प्रकृतेऽपि।

प्रमथशब्दः रुद्राभिधायी। "एकादश महारुद्राः सेनाश्च कुरुभूपतेः"इत्यभियुक्तोक्तेः प्रमथशब्देनैकादशसंख्याया ग्रहो भवति। तथात्वे आषाढस्यैकादशी रूढचैव लभ्यते।

"रुद्रावृत्तिः, रुद्रवर्तिः, मूलरुद्ररसस्तथा" इत्यादिषु प्रयोगेषु रुद्रपदेनैकादश-संख्याया एव प्रतिपत्तिः, न तु तत्संकेतितस्यार्थस्य।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

अक्टूबरमासस्य दशतारिकायां डॉ० द्विवेदिभिर्मदीयं लेखममुं पठित्वाऽन्ते श्लोकोऽयमुल्लिखितः—

**पक्षान्तराणि भवता न विचारितानि**
**दोषान्तराणि यदि तानि तदप्युदीर्यम् ।**
**उद्भावनाऽपि भवति क्वचिदादरार्हा**
**तां चेद् विहाय न गतिं लभतेऽर्थसार्थः ।।**

अतः पक्षान्तरे प्रमथपाठस्वीकारपक्षेऽपि काञ्चिद् दोषान् सम्भावयामि, निराकरोमि च ।

अनुपदोक्तानुशासनप्रयोगाभ्यां रुद्रपदेनैकादशसंख्याया बोधेऽपि प्रमथशब्दः कथं रुद्रार्थाभिधायी ? प्रमथपदस्य तदर्थाभिधायित्वेऽशक्तिमत्त्वञ्चेदसमर्थत्वम्, सङ्केतविरहादबोधकत्वञ्चेदवाचकत्वं विशेषस्थाने सामान्योपादानञ्चेद्विशेषपरिवृत्तित्वमिति प्राधान्येन त्रयाणां दोषाणां सम्भवे कथन्नामास्य निर्दुष्टत्वम् ? प्रथम-प्रमथेत्युभयत्र दोषस्य जागरूकत्वादेकस्य हानेऽपरस्योपादाने किं विनिगमकम् ? इति पृच्छायां प्रथमं प्रमथशब्दस्य प्रवृत्तिनिमित्तौ विचार आवश्यकः । कालिकापुराणे पारिषदोत्पत्तिनामैकोनत्रिंशदध्याये—

"षट्त्रिंशत्तु सहस्राणि प्रमथा द्विजसत्तमाः ।
तत्रैकत्र सहस्राणि भागे षोडश संस्थिताः ॥
योगिनो मदमात्सर्यदम्भाहङ्कारवर्ज्जिताः ।
अपरे कामिनः शम्भोः सुनर्मसचिवाः स्मृताः ॥
प्रमथ्नन्ति च युद्धेषु युध्यमानान् महाबलान् ।
अपरे रुद्रनामानो जटाचन्द्रार्धमण्डिताः ॥
शङ्करस्य च सेवायै समुत्पन्ना इमे गणाः" ।

इति शिवपारिषदत्वेन गणत्वेन च प्रमथानां निर्देशो लभ्यते । "प्रमथाः स्युः पारिषदाः" इत्यमरकोषात्, तथा च "निपात्य प्रमथानीकमभ्यधावत सोऽसुरः" इति सप्तशतीमन्त्रे, "प्रमथः गणः" इति नागेशभट्टव्याख्यानाच्च तेषां पारिषदत्वं गणदेवतात्वञ्च सुविवृतम् ।

उक्तसन्दर्भेण प्रमथास्त्रिविधाः—योगिनः, नर्मसचिवाः, रुद्राश्च । अथवा पूर्वं द्विविधाः—रुद्राः, अरुद्राश्च । अरुद्राः पुनर्द्विविधाः—योगिनः, नर्मसचिवाश्च ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतेषु नर्मसचिवत्वेन प्रमथानामुपादानं महाकविना कालिदासेनैव "प्रमथमुखविकारैर्हासयामास गौरीम्" इति पूर्वोक्तश्लोके स्पष्टं व्यधायि । योगित्वेन गणस्योपादानं तु—

लतागृहद्वारगतोऽथ नन्दो वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत्[1] ॥

इत्यत्र मदनकृते सुमहति संक्षोभेऽप्यविचालित्वं गणविशेषस्य नन्दिनः प्रस्तूय विहितम् । रुद्रार्थाभिधायित्वेन प्रमथस्य "आषाढस्य प्रमथदिवसे" इत्युपादानञ्चेत्त्रयोऽपि प्रमथविशेषाः कालिदासेन साक्षात्प्रमथपदोपादानानुपादानाभ्यां दर्शिताः ।

इत्थं सामान्यतया निर्दिष्टस्य प्रमथशब्दस्य विशेषरुद्रार्थाभिधाने स्पष्टमेव दुष्टत्वे कथं तन्निस्तार इति चेद् ब्रूमः--

नास्त्यत्राद्योऽसमर्थत्वदोषः । यत्तदर्थं पठ्यते तत्राशक्तिमत्त्वमसमर्थत्वम् इति लक्षणम् । तर्हि रुद्रार्थाभिधाने प्रमथपदस्य शक्तिर्वा न वेति ? न चेत् का वृत्तिः ? लक्षणेति चेन्न, अन्वयबाधादिहेतुं विना लक्षणाया अप्रसारात् । प्रमथपदस्य उद्दीपनविभावत्वेन "चेतः प्रमथ्नातीति" व्युत्पत्त्या रूढ्यर्थासंवलितव्युत्पत्तिलभ्यार्थकत्वेऽपि दिवसविशेषणतायामबाधात् । "योगाद्रूढिर्बलीयसी" इति न्यायेन बाधकस्य प्रमथगणस्यैवार्थत्वे तदर्थेऽस्याविवक्षितत्वात् संख्यामात्रस्य च विवक्षितत्वात् लक्षणा चेत् ? रुद्रोपादानेऽपि तुल्यैव स्थितिः । संख्यार्थे रुद्रपदवत् प्रमथपदेऽपि रूढेर्लक्षणायाः सत्त्वम्; किन्तु रुद्रार्थे प्रमथपदस्यालाक्षणिकत्वमेव । सामान्येन विशेषस्य व्यक्तेर्वा बोधः आक्षेपलभ्यो न तु वृत्तिवेद्यः, अनन्यलभ्यो हि शब्दार्थं इति न्यायस्य जागरूकत्वात् । अतः "जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते" इति मम्मटभट्टैरुक्तम् । इत्थं सामान्यशब्दानामेकविशेष्यबाधेनापरविशेष्यप्रकारकनैयत्येन रुद्रस्यारुद्रस्य प्रमथशब्दस्यारुद्रत्वबाधेन रुद्रत्वप्रकारेणान्वयबोधयोग्यत्वेन लक्षणाया अप्रसङ्गात्, अन्यलभ्यत्वेन पदस्य वृत्त्यनङ्गीकाराच्च । न लक्षणा, न च व्यञ्जना, वाच्यवृत्त्यनालिङ्गितस्यैव व्यञ्जनाबोध्यत्वात्, अत्र रुद्रारुद्रोभयवृत्तिप्रमथत्वव्याप्यरुद्रत्वस्य प्रमथशक्तावच्छेदककोटौ बोधविषयत्वं स्पष्टम् । अतः परिशेषाद् रुद्रार्थे प्रमथस्य शक्तिवेद्यताऽक्षुण्णा, यथा जातौ सङ्केतग्रहवादिनां व्यक्तौ सङ्केतग्रहे व्यक्तेः शक्तिवेद्यता । न च यथा तिङन्तस्य हन्तेर्गतावशक्तत्वमुपसंदानादिसाहचर्येण पद्धत्यादौ शक्तत्वं तथा प्रमथशब्दस्यारुद्रत्वविशिष्टे पारिषदे शक्तत्वं रुद्रत्वविशिष्टे चाशक्तत्वम् अस्ति येनासमर्थत्वं दोषः स्यात् ।

---

१. कुमारसम्भवे – ३।४१, १९८६, का० ग्रन्थावली, हिन्दूविश्वविद्यालयः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

न चावाचकत्वम्। सङ्केतविरहादबोधकत्वमवाचकत्वम्। अवाचकत्वस्यायं निष्कर्षः—वृत्त्यनवच्छेदकप्रकारकप्रतीतितात्पर्यकत्वमवाचकत्वमिति। न च लाक्षणिकत्वेऽतिव्याप्तिर्वाच्या, लाक्षणिकं लक्ष्यताऽवच्छेदकप्रकारकप्रतीतितात्पर्यकमेव। अर्थाद् यस्य पदस्य यदा यो धर्मो वृत्त्यनवच्छेदकस्तदा तत्प्रकारकप्रतीतितात्पर्यकं तत्पदं तमर्थं प्रत्यवाचकम्। "अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः" इत्यत्र अदातृत्वार्थे प्रयुक्तस्य जन्तुपदस्यादातृत्वं शक्तौ नावच्छेदकम्। अतो वृत्त्यनवच्छेदकादातृत्वप्रकारकप्रतीतितात्पर्यकत्वेन जन्तुपदस्यावाचकत्वमविच्छिन्नम्। अत्र तु रुद्रारुद्रोभयवृत्तिप्रमथत्वव्याप्यरुद्रत्वं शक्तावच्छेदकम्, अतो वृत्त्यवच्छेदकरुद्रारुद्रोभयवृत्तिप्रमथत्वव्याप्यरुद्रत्वप्रकारकप्रतीतितात्पर्यकत्वेन प्रमथस्य रुद्रत्वार्थे नावाचकत्वम्।

न च विशेषपरिवृत्तित्वम्। विशेषरुद्रपदमनुपादाय प्रमथस्य सामान्यस्योपादानेऽपि विशेषरुद्रार्थस्य प्राधान्येनान्वयेऽविवक्षितत्वात् तल्लक्ष्यायाः केवलसंख्याया विवक्षितत्वान्नास्ति विशेषपरिवृत्तित्वम्, विशेषपरिवृत्तौ विशेषस्यैव विवक्षितत्वात्। अर्थात् 'प्रमथदिवसे' इत्यत्र छन्दोभङ्गादिकमविचार्य "रुद्रदिवसे" इत्युच्येत चेत्तदानीमपि संख्येयरुद्रपदस्य दिवससान्निध्येन संख्यामात्रे लक्षणा, तथैव प्रमथशब्देनापि संख्यामात्रस्य लक्ष्यत्वे संख्येयरुद्रार्थस्याविवक्षितत्वमेव।

पूर्वोक्ताभ्यां रुद्रपदस्यानुशासनप्रयोगाभ्यां तेनैकादशसंख्याया ग्रहः सुकरः, प्रमथस्यातथात्वात् सहस्रसंख्याकत्वात् कथमेकादशसंख्या गृह्येतेति न वक्तव्यम्। पुराणेषु रुद्राणामप्यनियता संख्या लभ्यते, उपर्युक्तकालिकापुराण एककोटिः, महाभारते दानधर्मे, गारुडे षष्ठेऽध्याये, अग्निपुराणे चैकादशे, हेमाद्रौ ब्रह्माण्डपुराणे चाष्टौ संख्या रुद्राणां दर्शिताः। यथा—

**अपरे रुद्रनामानो जटाचन्द्रार्धमण्डिताः।**
**तेषां संख्या चैककोटिस्ते सर्वे बलवत्तराः॥** (कालिकापुराणे)

**रुद्रो भवश्च शर्वश्च ईशः पशुपतिस्तथा।**
**भीम उग्रो महादेव एते रुद्राः प्रकीर्तिताः॥**
**सौवर्चलाङ्गवादा च विकेशी च शिवा तथा।**
**स्वाहा दिशा च दीक्षा च रोहिणी च यथाक्रमात्॥**
**रुद्रपत्न्य इमाश्चाष्टौ...... ... ... ...॥** (हेमाद्रेर्दानखण्डे)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं रुद्राणामनियतसंख्याकत्वेऽपि प्रयोगप्रसिद्ध्या यथैकादशसंख्यायां रूढिर्लक्षणा, तथैव प्रमथस्यानियतसंख्याकत्वेऽपि त्रिंशद्दिवसात्मकाषाढमासस्य दिवससंख्यागणने बाधितत्वात् प्रमथत्वव्याप्यरुद्रत्वज्ञाप्यप्रसिद्धैकादशसंख्याबोधकत्वे नास्ति क्षतिः।

प्रमथ्नन्तीति व्युत्पत्तिरपि पुराणेषु योगिनर्मसचिवौ प्रमथौ विहाय केवलं रुद्रप्रमथस्यैव प्रवृत्तिनिमित्तावुपादानात् प्रमथेन रुद्रस्यैव झटिति ग्रहणसम्भवेऽर्थावबोधे विलम्बाग्रहाद् नास्ति दोषलेशोऽपि। रुद्रप्रवृत्तिनिमित्तावेव प्रमथस्य व्युत्पत्तिविधानम्, यथा—

**प्रमथ्नन्ति च युद्धेषु युध्यमानान् महाबलान्।**
**अपरे रुद्रनामानो जटाचन्द्रार्धमण्डिताः॥** इति।

इत्थं ग्रन्थान्तःसाक्ष्येण सहृदयाख्यसाक्ष्येण च निर्दुष्टं व्याकरणाद्यविरुद्धं पाठशोधनं चेद् विद्वांसः स्वीकुर्युस्तदानीं स्वकीयं श्रमसाफल्यं मन्वानोऽहं तान् शिरसा बिभर्मीति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आत्मजपरिचयः

डॉ० उमाशङ्करत्रिपाठी
प्राप्तावकाशोऽनुसन्धानाऽधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी

❀❀❀

तदर्थं वेदेषु श्रुतिः प्रतिष्ठिता—
"आत्मा वै जायते पुत्रः" इति।

आत्मा—इत्येवंरूपः पितैव पत्न्यां स्ववीर्यं प्रमुच्य स्वयं तद्वीर्येणोत्पन्नः पुत्रः समुत्पद्यते, इति हि श्रुत्यर्थः। तथैव गरुडपुराण–प्रेतकल्पे एकादशाध्याये एकादश-श्लोकः स्मृतः—

सर्वसौख्यप्रदः पुत्रः पितृप्रीतिविवर्धनः।
आत्मा वै जायते पुत्र इति वेदेषु निश्चितम् ॥ इति।
(ग० पु०, प्रे० क० ११।११)

वीर्यम् = वीरे (उत्साहवर्धके प्रभावे) साधु (योग्यम्) इति। वीरशब्दात् साध्वर्थे—"तत्र साधुः" (४।४।९८) इति यत्प्रत्ययः, "यस्येति च" (६।४।१४८) इति अकारलोपः। वीर्यः, वकार–बकारयोरभेदाद् वीर्यमपि। वीर्य एव पुरुषादिप्राणिनां तत्तेजोरूपपराक्रमः सर्वस्वभावश्च पूरितो भवति। अत एव विविधेन वीर्येण तच्छक्ति-शीलस्तत्स्वभावसम्पन्नस्तत्स्वरूपवाँश्च पुत्रो जायते। ईदृशी अनुपमा शक्तिर्वीर्यस्य। तथाऽमरः—"उत्साहोऽध्यवसायः स्यात् स वीर्यमतिशक्तिभाक्" (१।७।२९)। तथाऽमरेऽन्यच्च—"शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" (२।६।६२)। इयमेव गतिर्बीजस्य।

विजम् = विशेषेण जायते (वृक्षादिरुत्पद्यते) अनेन इति। वि–पूर्वाद् 'जनी प्रादुर्भावे' धातोः करणे—"उपसर्गे च संज्ञायाम्" (३।२।९९) इति डप्रत्ययः। टेरिति टिलोपः। "अन्येषामपि दृश्यते" (६।३।१३७) इत्युपसर्गदीर्घः। वकार-बकारयोरभेदाद् वीजम्, बीजमपि। तथाऽमरः—"हेतुर्ना कारणं वीजम्" (१।४।२८)। तथा हैमः—"बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" (२।७४)। बीजेऽपि वीर्यवत्

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्तद्वृक्षलतादीनाम् ओषधीनां तत्तेजोरूपपराक्रमः, तत्तद्रस–गुणादिस्वभावश्च सन्निविष्टो भवति। अत एव पिप्पलसूक्ष्मबीजेन बृहदाकृतिमान् पिप्पलवृक्ष एव समुत्पद्यते नान्यवृक्ष इति।

एवं हि पशुषु व्याघ्रवीर्येण तत्समो व्याघ्रः, हस्तिवीर्येण हस्ती, अश्ववीर्येण अश्वः, हरिणवीर्येण हरिण एव सम्भवति। तथा च विविधास्ते पशवः स्ववर्गेषु स्थिताः सन्तः स्व-स्ववर्गैरेव सह विचरन्ति, नान्यैर्वर्गैः सहेति। एवमेव पक्षिणश्चापि स्व–स्ववर्गैरेव सह विहरन्तीति दृश्यते। इयमेव रीतिः सर्प–नकुलादिषु तथा चान्येषु घुण–पिपीलिकादिषु क्षुद्रजीवेषु चापि विद्यमाना दरीदृश्यते। 'स्ववर्गे परमा प्रीतिः' इति नीतिमवलम्ब्य एव तेषां जन्तूनां स्ववर्गैरेव सहवासो भवतीति ज्ञायते। अतस्तेषामेषा सुबुद्धिरेव परिकल्प्यते; परन्तु मनुष्याणामिव तेषां स्वजातिषु परस्परं विवाहाभावात्, तथा मौर्ख्याच्च ते स्ववर्गेष्वेव स्वपुत्री-पौत्र्यादिभिश्चापि सह रमन्ते। मौर्ख्यादेव पशु-पक्ष्यादयः सर्वे जन्तवः पशव एव कथ्यन्ते। पश्यति सर्वम् अविशेषेण यः, स पशुः। दृशिर् प्रेक्षणे धातोः कर्तरि— "अर्जि-दृशि०" ( १।२७ ) इत्यौणादिक उप्रत्ययः, धातोः पशि-आदेशश्च। यस्येति चेति इकारलोपः। पशुः = मूर्खोऽविज्ञो वा निष्कर्षतः। यो धर्माऽधर्मं न जानाति स पुरुषोऽपि पशुरेव स्मृतः। इत्थं च ये पशवः पुरुषाः सन्ति तेऽपि प्रच्छन्नरूपेण परदारैः सह सम्बन्धं कुर्वन्तो दुस्साधाः ( ग्राम्यभाषायां विपरीत-गलद्वयिनः 'दोगला' इति ख्याताः ) सम्पद्यन्ते। दुस् दूषितं व्यभिचारादि-दुराचारं साध्नुवन्तीति। दुस्–पूर्वात् 'साध संसिद्धौ' धातोः कर्तरि—"नन्दिग्रहि०" (३।१।१३४) इति पचाद्यच्। दुस्साधाः = व्यभिचारिणः। एतद्दुराचारिभिरुत्पन्नाः पुत्र-पौत्रादयस्तेषां सर्वे दाराश्चापि दुस्साधा एव भवन्ति, क्रमशो दुराचारिवीर्यप्रभावात्। एते सर्वे सात्त्विकस्य मूलपितुः परमशत्रवः सम्भवन्ति। तथैव ते सर्वे पापिनोऽपि सन्तिष्ठन्ते। तेषां पापफलं मनुस्मृतौ चतुर्थाध्याये वर्णितम्—

अधर्मेणैधते तावत् ततो भद्राणि पश्यति।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥ ( मनु० ४।१७४ )

अर्थात् –दुराचारी पुरुषः पापकर्मणा प्रथमे स्वसमये धनधान्यादिभिः संवर्धते। ततो द्वितीय–पुरुषसमये कल्याणकरकार्यैः संयुनक्ति। ततस्तृतीयपुरुषकाले शत्रून् विजित्य पराक्रमशीलः सम्भूय चतुर्थपुरुषसमये समूलो विनश्यत्येवेति निश्चितम्।

वस्तुतः पुरुष–स्त्रीणां मध्ये स्त्रियो विशेषरूपेण व्यभिचारिण्यो दृष्टाः सन्ति। एतासामेव पापाद् महाभारतं ( महायुद्धं ) प्रादुरभूत्। बिभर्ति स्वाङ्गं पोषतीति। 'डुभृञ् धारणपोषणयोः' धातोः कर्तरि— "भृ-मृ-दृशि-यजि-पर्वि-पच्यमि-तमि-नमि-हर्येभ्योऽतच्" ( ३।१०७ ) इत्यौणादिकः अतच्प्रत्ययः। भरतः = स्वाङ्गपोषको योद्धा। तथाऽमरः—"शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः। भरता इत्यपि नटाः

CC-0. Sampurnanand University Collection. Digitized by eGangotri

( योद्धारः )" (२।१०।१२) । यद्वा—बिभर्ति प्रजाः पोषतीति । 'डुभृञ् धारणपोषणयोः' धातोः कर्तरि— "भृ-मृ-दृशि०" ( ३।१०७ ) इत्यौणादिकः अतच्प्रत्ययः । भरतः = प्रजापोषको राजा । उणादि-कृदन्ते तत्त्वबोधिन्यां तथोक्ता मेदिनी—"भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ" । इति । दुष्यन्तपुत्रः सम्राट् भरतः । सम्राजो भरतस्य इदम् ( वर्षं राष्ट्रं वा ) इति । भरत-शब्दाद् इदमर्थे "तस्येदम्" (४।३।१२०) इत्यण् । भारतम् = भारतवर्षम् । यदि भरतस्य योद्धुः इदं ( कर्म ) इत्यर्थः क्रियते, तदा भरतशब्दाद् इदमर्थे "तस्येदम्" ( ४।३।१२० ) इत्यण् । भारतम् = योद्धुः कर्म युद्धम् । महाभारतम् = महायुद्धम् । अस्य महाभारतस्य कारणं पाण्डव-कौरवाणां पापस्त्रीवृन्दमेवासीत् । तथाप्तैः पापस्त्रीवृन्दमुक्तम्—

अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
यथैताः पञ्चकन्याः स्युर्न विद्यन्ते तथा क्वचित् ॥ इति ।

एताः पञ्चकन्या यत्रासन् तत्र सर्वत्राऽनिष्टकरमेव युद्धमभूत् । विवाहिताः सत्योऽप्येताः कन्याः कथिताः सन्ति । कन्यास्वपि यदि प्रच्छन्नरूपेण गर्भः स्यात्, तदा सापि विवाहितैव भवति । तथैवाह याज्ञवल्क्यः—

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥

(याज्ञ० आचाराध्याये, विवा० प्र०, श्लो० ६७)

अर्थात्—अविवाहितया कन्यया सह यदि गुप्तरूपेण कस्यचित् पुरुषस्य संयोगः स्यात्, तदा क्षतयोनिरपि सा अक्षता ज्ञायते । तस्या विवाहे कृते सा पुनर्भूः (पुनर्विवाहिता) पुनर्विवाहसंस्कृता एव भवति । तथा या कन्या विवाहसंस्कारेण एकवारं संस्कृता भवति सा क्षता कथ्यते । वरदोषेण यदि तस्या अन्यत्र विवाहश्चेत्, तदा सा क्षताऽपि पुनर्भूः कथ्यते । या विवाहिता स्त्री स्वपतिं त्यक्त्वा कामातिशयेनाऽन्यं पतिं करोति, सा तु स्वैरिणी पुंश्चली कुलटा वा कथ्यते । निष्कर्षतः पुरुषापेक्षया स्त्रीषु कामाधिक्यादेव व्यभिचाराधिकता भवतीति बोध्यम् । तथाप्तवचनम्—

स्त्रीणामष्टगुणाः कामाः प्रोक्ताः शास्त्रविदांवरैः ।
भाग्येन रक्षिताश्चेत् ताः सुखं व्रजन्ति मानवाः ॥ इति ।

अतः स्त्रियः स्वतन्त्रा न भवेयुरिति तासां वृद्धावस्थां यावद् रक्षणं कुर्यात् । याज्ञवल्क्यस्तथा तासां रक्षाविधिमाह—

रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः ॥

(याज्ञ० आचारा०, वि० प्र०, श्लो० ८५)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विन्नाम् = विवाहयुक्ताम् । वार्धके = वृद्धावस्थायाम् । तेषाम् = पितृ-पति-पुत्राणाम् । ज्ञातयः = ग्रामवासिनो बान्धवाः । क्वचित् = बाल्यावस्था-युवावस्था-वृद्धावस्थासु । अर्थात् स्त्रियाः स्वातन्त्र्यं वृद्धावस्थां यावत् कदापि न भवेत्, तथा व्यवस्था कार्या ।

यस्याः स्त्रियाः जारेण उपपतिना वा संयोगो भवति, तस्यां जारजा दुस्साधा सन्ततिरुत्पद्यते । तस्यां च सन्ततावुत्पन्नाः पुत्रा मातृरक्तमिश्रित-जारवीर्यस्य प्रभावाद् वेश्यापुत्रवद् मातृपक्षीया एव भवन्ति, न तु पितृपक्षीयाः; अपि तु ते पितुः परमशत्रव एव सम्पद्यन्ते । जारजवीर्येण मिश्रितरक्तदोषादेव तेषां कुलटा मातापि अज्ञस्य विदुषो वा स्वपत्युः सर्वथाऽभिघातिनो सिद्ध्यति । कटुभाषिणी सा कदाचिदवसरे प्राप्ते विषाक्त-सिद्धान्नपेयादिवस्तुभिः पत्युः प्राणहन्त्र्यपि सम्भवति । तथैव आचाराध्याये विवाहप्रकरणे याज्ञवल्क्यवचनम्—

व्यभिचाराद् ऋतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भ-भर्तृवधादौ च तथा महति पातके ॥
(याज्ञ० आचारा०, वि० प्र०, श्लो० ७२)

अर्थात्—स्त्रिया व्यभिचारे कृते सति तस्या रजःपातेन शुद्धिः स्यात् । ततः सा स्त्री तु रक्षितुं योग्या; किन्तु गर्भवती, गर्भहन्त्री, भर्तृहन्त्री तथा ब्रह्महत्यादिमहापातककर्त्री च स्त्री सर्वथा त्याज्यैवेति । अपि चान्यद् वचनम्—

सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥
(याज्ञ० आचारा०, वि० प्र०, श्लो० ७३)

अर्थात्—या स्त्री मद्यपानकर्त्री ( यदा कस्यचित् स्त्री शूद्रा स्यात् तदा साऽपि ), यतः "पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्" इति सामान्यनिषेधात् । तथा कुष्ठादि-दुर्जेयव्याधियुक्ता, मिथ्यावक्त्री, धूर्ता, वन्ध्या, धनहर्त्री, कटुभाषिणी, सर्वदा कन्याजननो, सर्वत्र पत्युः अहितकरा—एतासु दुष्टस्त्रीषु एकस्यामपि दुष्टायां सत्यां द्वतीयो विवाहः कार्यः । अतो व्यभिचारिण्यां दुष्टायां च स्त्रियामुत्पन्नपुत्रः पितुः सदा विविधकष्टदायको भवतीति निश्चितमेव ।

किन्तु उपर्युक्तश्रुत्यनुसारं स्वपितुर्वीर्येणोत्पन्न आत्मजः स्वपितुः सदा प्रीतिवर्धकः सर्वसुखप्रदः सन् परमाज्ञाकारी भवति । स तु स्वीयं पितरं पुरुषरूपाद् नरकादपि मोक्तुं समीहते । यतो धनी दीनो वा सर्वविधपुरुषोऽपि नानादुःखसम्पन्नो गर्भान्निस्सृतो नरक एव अभिज्ञातः । अतिकष्टकर-गर्भान्निस्मृतः पुरुषो वारं वारं पुनर्गर्भे पतन् गर्भकष्टभोक्त्रीन् पुत्रानपि समुत्पादयति । अतो ज्ञायते यत् पुरुषोऽप्येकः कष्टकरो नरक एव ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

दुःखं नरति (नयति) नृणाति वा इति। 'नॄ नये' धातोः कर्तरि—"कृञादिभ्यः संज्ञायां वुन्" (५।३५ इत्यौणादिको वुन्। "युवोरनाकौ" (७।१।१) इति अकादेशः नरकः=कष्टैः पूर्णः, कष्टदायकः। नरक एव नारकः। नरकशब्दात् स्वार्थे "प्रज्ञादिभ्यश्च" (५।४।३८) इत्यण्। नारकः=नरक एव। तथाऽमरः—"स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" (१।९।१)। तथा हि मेदिनी—"नरकः पुंसि निरय-दवाऽरातिप्रभेदयोः" (९।१०९)। विश्वोऽपि—"नरको निरये दैत्ये" (६।५०)। अतः पिता पुनर्नरकरूपः पुरुषो न भवेदिति पुत्रः पितरं श्राद्धादिना तस्मात् पुरुषरूपाद् नरकात् तारयित्वा संसार-बन्धनान्मुक्तं करोति, स्वयं चापि मुक्तो भवति। तथैवोक्तं मनुस्मृतौ नवमाध्याये मनुना—

पुंनाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥ (मनु० ९।१३८)

पुंनामा=पुमान् पुरुष इति नाम यस्य नरकस्य, स पुंनामा इति। "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९) सूत्रेण पुम्स्-गतस्य सकारस्य लोपनिपातनात् पुंनामा=पुरुषनामा। तथैव पुत्रः=पुमांसं पुरुषरूपं पितरम् (पुंनाम्नो नरकात्) त्रायत इति। पुम्स्पूर्वात् 'त्रैङ् पालने' धातोः कर्तरि "आदेच उपदेशेऽशिती"ति धातोरात्वे—"आतोऽनुपसर्गे कः" (३।२।३) इति कप्रत्ययः। "आतो लोप इटि च" (६।४।६४) इति धातोराकार-लोपः। "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९) इति पुम्स्-गतस्य म्स्-इत्यस्य लोपो निपात्यते। पुत्रः=पुरुषरूपान्नरकात् पितुस्त्राता आत्मजः। अनेनैव विधिना "पुंयोगादाख्यायाम्" (४।१।४८) इति सूत्रे पुंयोगात्—इत्यस्य पुरुषयोगात् पुरुषसम्बन्धा-दित्यर्थो भवति। अतः शास्त्राणां विविधप्रमाणैर्निश्चीयते यत् स्वपितुर्वीर्येणोत्पन्नः पुत्र एव पितुः परमाज्ञाकारी पुत्रः। अन्यस्तु स्वपितुः परमशत्रुः सन् वेश्यापुत्र इव दूषितवीर्य-रक्तप्रभावात् सदा मातृपक्षीयो जार-जारजसङ्गीयो दुस्साध एव लोके ख्यायते।

तथा च मनुस्मृतौ जारजः पुत्रो द्विविधः प्रोक्तः—१. कुण्डः, २. गोलकश्च। तथोक्तं मनुना—

परदारेषु जायेते द्वौ सुतौ कुण्ड-गोलकौ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः॥ (मनु० ३।१७४)

अर्थात्—परस्त्रियां तस्याः स्त्रियाः पत्यौ जीवति जारेणोत्पन्नः पुत्रः कुण्डः कथ्यते, मृते पत्यौ चोत्पन्नः पुत्रो गोलकः कथ्यते। कुण्डः=कुण्डयते दह्यते कुलम् अनेनेति। 'कुडि दाहे' धातोः करणे—"अकर्तरि च कारके संज्ञायाम्" (३।३।१९) इति घञ्। कुण्डः=कुलनाशकः। गोलकः=गूर्यते हिंसति कुलमिति। 'गूरी हिंसागत्योः' धातोः

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कर्तरि–"नन्दिग्रहि०" (३।१।१३४) इति पचाद्यच्, पुगन्तेति गुणः–गोरः। रलयोरभिन्नत्वाद् गोलोऽपि। गोल एवेति गोलशब्दात् स्वार्थे "संज्ञायां कन्" (५।३।७५) इति कन्। गोलकः=कुलहिंसकः। कुण्ड-गोलकाभ्यां पितृभ्यो दत्तानि हव्यकव्यानि नष्टानि भवन्ति, यैर्विना बुभुक्षितेषु पितृषु पुत्रकुलं नष्टं भवति। तथैवोक्तं मनुना—

तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च।
दत्तानि हव्य-कव्यानि नाशयेते प्रदायिनाम्॥ (मनु० ३।१७५)

अत एव याज्ञवल्क्यस्मृतौ व्यभिचारि-व्यभिचारिण्योः प्रायश्चित्तार्थं दण्डः प्रोक्तः—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्।
परिभूतामधःशय्यां वासयेद् व्यभिचारिणीम्॥

(याज्ञ० आचाराध्याये, वि० प्र०, श्लो० ७०)

अर्थात्—यदा व्यभिचारिण्या व्यभिचारवृत्तिस्तस्याः चरित्रेण प्रकटिता भवेत्, तदा तस्याः सर्वाधिकारं छित्त्वा मलिनवस्त्रां कृत्वा प्राणयात्रामात्रयोग्यं भोजनं दत्त्वा तिरस्कृतां च कृत्वा स्वगृह एव भूमौ तां वासयेत्। एष स्वल्पो दण्डः।

परस्त्रिया सह सम्भोगिने दण्डविधिः—

तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां चोत्सृजेत् तनुम्॥

( याज्ञ० प्रायश्चित्ताध्याये, गुरुत० प्र०, श्लो० २५९ )

अर्थात्—लोहशय्यायामुपरि लोहमयीं स्त्रियं सन्धार्य तां शय्यामग्निना सन्तप्य तया सन्तप्तया लोहमयस्त्रिया सह व्यभिचारिणं स्वापयेत्, येन स दग्धः स्यात्। अथवा व्यभिचारिणोऽण्डकोषौ आयुधेन उत्कृत्य तस्याञ्जुलौ तौ धृत्वा तं वदेद् यत् त्वं निर्ऋतिकोणं गच्छ इति। स तावद् गच्छेद् यावत् स निष्प्राणो न भवेत्।

तथान्यच्च—

क्षेत्र-वेश्म-वन-ग्राम-विवीत-खलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥

( याज्ञ० व्यवहा०, स्तेयप्र०, श्लो० २८२ )

अर्थात्—क्षेत्रस्य, गृहस्य, उपवनस्य, ग्रामस्य, विविक्तस्थानस्य, खलस्य ( खलिहानस्य ), दाहकान् तथा श्रेष्ठस्त्रिया सह सम्भोगिव्यभिचारिणं च कटेन वेष्टयित्वा दाहयेत्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अतिदुष्टायाः स्त्रियाः दण्डविधिं व्यवहाराध्याये स्तेयप्रकरणे याज्ञवल्क्यः प्राह–

विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ।
सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत् ॥
( याज्ञ० व्यव०, स्तेयप्र०, श्लो० २७८ )

अर्थात्—अतिदुश्चरित्राम्, स्वपतिहन्त्रीम्, कृतसेतोः भिन्नकरीं स्त्रियं गले पाषाणं बध्वा जले प्रवेशयेत् ।

तथा याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्याये कर्मविपाके व्यभिचारिणः परस्त्रीहर्तुः जन्मान्तरे तत्पापफलं प्रोक्तम्—

परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥
(याज्ञ० आचारा०, श्लो० २१२)

परस्त्रीहर्ता विप्रधनापहारकश्च जन्मान्तरे वनीये निर्जले स्थाने ब्रह्मराक्षसो भवति । तदेष पुनः पुनर्ब्राह्मणान् हत्वा बहूनि वर्षाणि यावत् तिष्ठन् ब्रह्मराक्षसत्वान्न निवर्तते कदाचिदिति प्रतीयते । तथैव व्यभिचारिण्या अपि जन्मान्तरे बहुकष्टमयं जीवनं भवतीति मनुना वर्णितम्—

व्यभिचारात् तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ (मनु० ५।१६४)

कस्याऽपि भर्तुः व्यभिचारिणी स्त्री परपुरुषैः सह व्यभिचारात् लोकेऽस्मिन् जीवनकालं यावद् यशोहीना सती जीवति । पुनर्मृता सा जन्मान्तरे दुस्सहां सर्वैरवहेलितां शृगाल-योनिं प्राप्य प्राणरक्षणाय सदा सुगुप्तस्थानेषु रहस्येव निवसति । यदा कदाचित् कस्मिन्नपि जन्मान्तरे मनुष्ययोनौ जन्म गृह्णाति, तदा सा जीवनपर्यन्तं दीर्घश्वास-कुष्ठादिविकृतरोगैः परिपीड्यते सदा । तदा धर्माऽधर्मज्ञानमनुभूयते सर्वैरिति निश्चितमेवेति ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **अद्वैतमकरन्दः**—श्रीलक्ष्मीधरकविप्रणीतमिदं ग्रन्थरत्नं 'पण्डितपरिक्रमायाः' चतुर्थस्तवकरूपेण श्रीस्वयंप्रकाशयतिप्रणीतया 'रसाभिव्यञ्जिका'व्याख्यया, अथ च श्री ए० ई० गफप्रणीतेन आङ्ग्लभाषानुवादेन समलङ्कृत्य प्रकाशितम्—१००-००

२. **वेदान्तकौस्तुभप्रभा**—श्रीमत्केशवकाश्मीरिभट्टविरचितोऽयं ग्रन्थः 'पण्डित-परिक्रमायाः' षष्ठस्तवकरूपेण सुसम्पाद्य प्रकाशितः— ३००-००

३. **ईश-केनोपनिषदौ**—ग्रन्थोऽयं पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायकृताङ्ग्लभाषानुवादेन समलङ्कृत्य 'पण्डितपरिक्रमायाः' सप्तमस्तवकरूपेण प्रकाशितः— ५०-००

४. **तत्वमुक्तावली**—गौडपूर्णानन्दचक्रवर्तिविरचितमिदं ग्रन्थरत्नं 'पण्डितपरि-क्रमायाः' पञ्चमस्तवकरूपेण श्री ई० बी० कावेलमहोदयकृताङ्ग्लभाषानुवादेन समलङ्कृत्य प्रकाशितम्— ५०-००

५. **शब्दार्थमीमांसा**—व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थो बहुशास्त्रमर्मज्ञैः डॉ० गौरीनाथशास्त्रिमहोदयैः स्वोपज्ञतया प्रणीतः— १००-००

६. **काशीखण्डः (द्वितीयो भागः)**—महर्षिव्यासप्रणीतः स्कन्दपुराणान्तर्गतोऽयं ग्रन्थ आचार्यश्रीरामानन्दकृतया 'रामानन्दी'-संस्कृतव्याख्यया, अथ च पण्डित-श्रीनारायणपतित्रिपाठिकृतया 'नारायणी'-हिन्दीव्याख्यया च समलङ्कृत्य प्रकाशितः— २००-००

७. **व्याकरणशास्त्रे लौकिकन्यायानामुपयोगः**—ग्रन्थोऽयं व्याकरणशास्त्रमर्मज्ञैः डॉ० रामकिशोरशुक्लमहोदयैः प्रणीतः— ८०-००

८. **वास्तुसौख्यम्**—श्रीटोडरमल्लविरचितं ज्यौतिषशास्त्रस्य वास्तुसम्बन्धिग्रन्थमिदं आचार्यश्रीकमलाकान्तशुक्लकृतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितम्—१२०-००

९. **सुन्दरीमहोदयः**—श्रीशङ्करानन्दनाथप्रणीतस्तन्त्रशास्त्रस्यापूर्वोऽयं ग्रन्थः पाठभे-दानालोच्य सर्वप्रथमं सुसम्पाद्य प्रकाशितः— १५०-००

१०. **त्रिकदर्शनम्**—ग्रन्थोऽयं बहुशास्त्रमर्मज्ञैः प्रो० रामचन्द्रद्विवेदिमहोदयैः स्वोपज्ञ-तया प्रणीतः— १००-००

११. **श्रीस्वच्छन्दतन्त्रम्**—तन्त्रशास्त्रस्याधारभूतमिदं ग्रन्थरत्नं महामाहेश्वराचार्य-श्रीक्षेमराजकृतोद्द्योताख्यविवरणोपेतं सत् प्रकाशितम्—

| | | | |
|---|---|---|---|
| प्रथमो भागः | ५०-०० | द्वितीयो भागः | ५०-०० |
| तृतीयो भागः | ५०-०० | चतुर्थो भागः | ६०-०० |
| | | पञ्चमो भागः | ५०-०० |

१२. **श्रीतन्त्रालोकः**—ग्रन्थोऽयं महामाहेश्वराचार्यश्रीमदभिनवगुप्तविरचितः। अशेषागमोपनिषदालोकोऽयं ग्रन्थ आचार्यश्रीजयरथकृतया 'विवेक'-व्याख्यया, अथ च डॉ० परमहंसमिश्रकृतया 'नीर-क्षीर-विवेक'हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितः— प्रथमो भागः—१२४-००
द्वितीयो भागः—१३२-००

१३. **विरूपाक्षपञ्चाशिका**—ग्रन्थरत्नमिदं श्रीविद्यानन्दचक्रवर्तिकृतविवृत्या, अथ च गभीरया भूमिकया समेधितं सत् प्रकाशितम्— १६-००

१४. **साम्बपञ्चाशिका**—श्रीसाम्बप्रणीतोऽयं ग्रन्थो राजानकश्रीक्षेमराजकृत-विवृत्या, अथ च गभीरया भूमिकया समलङ्कृत्य प्रकाशितः— १२-००

पत्रव्यवहारसङ्केतः—प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१ ००२

CC-0. Sampurnanand University Collection. Digitized by eGangotri